विद्या प्रसारक मंडळ, ठाणे

| पुस्तकाचे नाव | : | श्री परशरसंहिता : श्री हनुम च्चरितम् |
|---|---|---|
| संपादक | : | अन्नदानं चिदम्बर शास्त्री |
| प्रकाशक | : | आन्ध्र प्रदेश : तिम्मसमुद्रम् प्रकाश मण्डलम् |
| प्रकाशन वर्ष | : | १९९८ |
| पृष्ठे | : | २९१ पृष्ठे |

**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : ५७

# श्री पराशर संहिता

## (श्री हनुमच्चरितम्)



२



सम्पादकः प्रकाशकश्च ।
भाषा प्रवीणः' 'साहित्य विद्याप्रवीणः' 'वैद्यविद्वान्' 'हिन्दी विशारद'

**डॉ० अन्नदानं चिदम्बर शास्त्री** M.A. & M.A., Ph.D.

अध्यापकः
एस्० जी० वी० संस्कृत कलाशाला

तिम्मसमुद्रम् - प्रकाशं मण्डलम् - आन्ध्र प्रदेशः



ॐ

**His Holiness Jagadguru**

**SRI SIVA CHIDANANDA BHARATHI SWAMI**

SRI SIDDHESWARI PEETADHIPATI

COURTALLAM-627 802

Tamilnadu

Date 6—5—1!

Parasara Samhitha is a master piece on Ha
ıan authored by the great Rishi Parasara. It is
ıcyclopedea on Hanuman. Hanuman cannot
ɔnsidered as a legendery hero of Ramayana
hrethayuga. Hanuman is considered to be Chir
vi and the future Brahma i. e., creator. Parasa
amhitha is divided into several chapters, ea
ealing with specific result oriented Anustana
.e being the Bhavishyath Brahma, everybo
ıould worship him for attaining all munda
esults, while simultaneously trying to att
Ioksha. The Parasara Samhitha text is not av
ble in common market as it needs reprint If
'arasara Samhitha is transliterated in to Nag
ıipi, it will be useful to all in India and also
road. The Parasara Samhitha needs a vide cir

tion all over the world, not only by translite
ng in to their mother tongues, but also a faith
anslation of the same in their respective motl
ngues.

Chiranjeevi Annadanam Chidambara Sastry
venturous in his thoughts and deeds. He is a
realise the results with his unending energ
d tenacity. Latest adventure is the publicat
Parasara Samhitha in Nagaralipi. He has alrea
t this printed and showed me in loose prin
rms which is to be brought in to a book sha
e needs encouragement, in all respects.

I bless him to release this book as early
ssible and further by invoking the Benign Gr
Sri Rajarajeswari Ambal, the presiding Diety
i Sidheswari Peetham.

With Narayana smrithis,

Sri Siva Chidananda Bharathi Swa

*

'Tarka Vedanta Samrat. 'Nyaya Vedanta Sast
Ratnakara' 'Sastra Nidhi', 'Tarka Vedantachar
'Darsanacharya', 'Maha Mahopadhyaya',
'Recipient of president's honour'
ब्रह्मश्री मद्दुलपल्लि माणिक्य शास्त्री

# प्रशंसा

श्रीरस्तु । श्रीमद्भिः अन्नदानं चिदम्बर शास्त्रि महा
कादश रुद्रमूर्त्यवताराणां श्री परदेवी स्वरूपाणां श्रीराम
रम भक्ताग्रेसराणां येषां स्मरण मात्रेण सर्वपुरुषार्थ सम्प्राप्तिर्भव
षां हनुमतां माहात्म्य प्रतिपादका "पराशर संहिता" महाग्रन्थ
च ग्रन्थः कालवशेन अन्तर्हितोऽपि महताक्लेशेन तद्गुरुत्वर
सादवशेन च सर्वजनानां ऐहिकामुष्मिक फलाऽवाप्तये नाग
रैः सम्यक् प्रकाशित इति परमं प्रमोद मनुभवामि । अयं चा
न्थः, परम प्रामाणिकः, हनुमद्देवताऽनुग्रहाभिलाषिभिः सर्वै
ादरसा संप्राप्य पठनीयः । तत्प्रतिपादनानुसारेण हनुमानुपा
ाराधनीयः ध्येयश्च । ममाऽपि आराधन पद्धतौ हनुमानेव अ
ाराधितः अनन्तरं सह गुरूणा मनुग्रह वशेन परदेवतानुग्रह पद्ध
ह्मविद्या च लब्धा । चिदम्बर शास्त्रि महाशयैः एतदग्र
काशन दर्शनानन्तरं मम हृदि महती सन्तुष्टिः समजनी
वेदयामि ।

एवं निवेदिता

जयवाडा — तर्कवेदान्त सम्राट्, महामहोपाध्याय

१-६-१९९७ — मद्दुलपल्लि माणिक्य शास्त्री

*

:. S. B. *Raghunathacharya*
-Chancellor

Rashtriya Sanskrit Vidyapeetha
(DEEMED UNIVERSITY)
TIRUPATI-517 507 (A. P.)
Date 14-10-1996

r Dr. Chidambara Sastry

I Thank you very much for sending the books RASARA SAMHITA" and other works, wri- by you.

I sincerely appreciate the efforts put in by you 'inging out the books, which are clear and com- in all aspects.

: feel reading your books is rather a mental sure than a mental effort

With regards.

yours sincerely,
(S. B. RAGHUNATHACHARYA)

*

'edantha Siromani'
'edantha Visarada' 'Vidvan'
**r. P. SRIRAMACHANDRUDU**
I. A. Ph. D. (Skt.) M. A. (English)
I. A. (Hindi) Recipient of President's
ertificate of Honour
ofessor of Sanskrit, O. U. (Rtd.) Hyderabad-500 (

There are millions of devotees of the Lord Ha
ıan through out India who assert with full con
ənce that they have had the experience of t
rds' grace, in various ways on different occa
ns. As a wellknown Sloka says Hanuman besto
his devotees, who merely remember him ra
fts such as intelligence, strength, fame, coura
arlessness, good health, agility and skill in spe
ng.

While the Ramayana of Valmiki is the or
urce of information about the greatness of Han
an for many people there is a very importa
ork, Parasara Samhita in fifty chapters (Patala
ompletely devoted to describe the life-story, exp
s and the greatness of Hanuman. This work whi
in the form of a dialogue between Parasara a
aitreya deals with various methods of worsh
Hanuman (Tantras], Mantras and Yantras a
any auxillary subjects connected with them,
tail, in different chapters. According to th
mhita Hanuman who is free from death is goi
be the creator in the nest Kalpa.

This work in the form of palm-leaf manuscri
as been zealously guarded by sum persons, in th
ouses, as a valuable possession inherited from th
ncestors, some of them using it for their perso
urposes but many of them just keeping it a
acred thing, not knowing even the contents.

It is by the untiring efforts, over two or th
ecades, of Sri Annadanam Chidambara Sast
ho has taken it as his life's mission to bring t
reat work to light for the use of all those w
re interested and also for the benefit of the pos
ty that it is now being published, perhaps for
rst time, in Devanagari script. But for the const
fforts of Sri Sastry to pursuade the owners of t
anuscripts to allow him to study them it wo
ot have been possible to publish this work whi
a major step in giving a filip to the great cult
anuman. Sri Sastry has got nine temples
anuman, with nine different Murties, as describ
the Samhita, installed in them.

I am sure that many devotees of Hanum
ill be benefeted by studying this Samhita a
ceive the grace of the Lord Hanuman by worsh
ng him strictly in accordance with the ru
id down in this work.

3-5-1997 Yours

yderabad P. Sri Ramachandru

# आमुखम्

'डाक्टर' इत्युपाधि भाजः श्रीमतः अन्नदानं चिदम्बर शास्त्रि महो
कुल विलष्टत्व सहिष्णुतया विद्यां प्राप्तवन्तः गुरुजनाधमर्णा न म
ध्यापनमेव वृत्ति मवलम्ब्यापि अधीति, बोधाचरण प्रचारणैः स्वि
तुर्दशत्वं सङ्कुटितवन्तः । एतेषां प्रवृत्तिः परिशोधन, प्रसारण
वृत्ता एव । तत्रत्यैः स्वशिष्यनिवहैः दिक्षु व्याप्त यशाः पुण्यश्लो
धानेपु शिष्यनिवहैः विनियुज्यमाना विद्या गुरुहि गुणवत्तर मातनो
ति सूक्तिः एतन्महाभागेभ्यः सर्वथा सार्थक मभवदिति मन्ये ।

भगवते हनुमते एतेषां भक्ति रनन्या एकान्तिका चेति ज्ञाय
ला शङ्करः परमेश्वर इव हनुमानपि भक्तजन विषये अल्पसन्तोषी,
न सुलभ साध्यश्च । तदेकभक्त्या प्रार्थितः सन हनुमान् अद्यापि स्वभ
प्र मनुगृह्णाति, विपद्भ्यः तान् तत् क्षणं उद्धरिष्यतीति शिष्टैः वृद्ध
प्रसगेपु विदितमेव ।

तस्य महात्मनः रामभक्त हनुमतः सर्वंकर्षं चरितं एतस्मिन् परा
हितायां चारु रूपेण ग्रथितम्। अस्मिनग्रन्थे विंशत्युत्तरशत पटलाः सन्त
थ परिशीलनात विदितं भवति । शास्त्रिवर्यैः भगीरथ प्रयत्नेन
इवत् निर्विराम दिवारात्र परिश्रमेण एतस्य चयनं अकारि । नो
हि सर्वः सर्वं जानाति" इति सूक्त्यनुसारेण हनुमतः चरित्रवि
माकं ज्ञानं बहुपरिमितं नास्ति सदृशमेवावशिष्यति । एतत् महाका
० शास्त्रिवर्याः भक्तजन संस्तुत्याः पठितॄणां परिशोधकानाँ च महोप
र्वन्निति नाऽत्र लेशोऽपि संशयः ।

अयं ग्रन्थः पराशर मैत्रेय संवाद स्वरूपः । ग्रन्थस्य विषये स्थ
ाक न्यायेन किञ्चि दिव पश्यामः । बाल्यात् प्रभृति हनुमतः च
भुत सन्निवेश विशिष्ट मेव । चिरञ्जीविन हनुमतः चरितं त्रेताद्वार
त्रय परिव्याप्तं बहुग्रन्थ परिमृष्टं च दृश्यते । रामभक्त हनुमान्
तेः साकार मूर्तिः । यथा रामो विग्रहवान धर्मः इति उच्यते,
मान विग्रहवान् भक्तिरिति च कथितुं शक्यते ।

'वैदेही सहितं सुरद्रुमतले' इति ध्यान श्लोके यथा वर्णितं 'अग्रे वाचय
ञ्जन सुते तत्वं मुनिभ्यः परं" इति पादेन ज्ञायते तत् पवमान
ध्यात्मिक विषये परमाचार्यः परम मुनीनामपि तत्त्वोपदेष्टा च इति ।

अयमेव तथ्यमुद्घोषितं षष्ठपटले हनुमज्जन्म कथन प्रसंगे -

''महा बलं महासत्वं - विष्णुभक्ति परायणम्
सर्व देवमयं वीरं - ब्रह्मविष्णु शिवात्मकम् ।

वेदवेदाङ्ग तत्त्वज्ञं - सर्व विद्या विशारदम्
सर्वब्रह्म विदां श्रेष्ठं - सर्व दर्शन सम्मतम् ।।" इति

एषः ग्रंथः बहु विषय विषयान्तर परिपुष्टः विज्ञान सर्वस्व ल
युतः इति भाति । हनुमद प्रभाव कथनेन साक प्रसङ्गवशात् भक्तोपय
षयान्यनेकानिच वर्णितान्यत्र ।

हनुमत्सम्बंधि मन्त्रशास्त्र विषयान्यपि अस्यां संहितायां र
द्भवः । तद्ज्ञाः पश्यन्ति ते बहूपकारकानीति लौकिकानां च । अ
द्भवः ग्रन्थकर्तारः अस्मात् ग्रन्थात उद्धृतानि स्वीकुर्वन्ति स्म इति । र
स्य प्रामाणिकत्व विदित मेव । वाग्गेयकार पितामहः श्री ताल्ल
न्नमाचार्यः स्वस्य केषु चित् पदेषु अस्याः संहितायाः बहून् विष
यकरो दिति ज्ञायते तुलनात्मक परिशीलनेन । तथैव पुष्पगिरि तिम्मन
वि शिरोमणिनापि स्वस्मिन् ग्रंथे समीर कुमार विजय नामके, कांश्
शान् स्वीकृतवान् इति च ।

सुवर्चला चरितम्, भीमसेनोपाख्यानं आदि हनुमत् महिमा द्योतका
तः हनुमद् विद्या, तस्याः प्रचार पद्धतिश्च सप्तधा विद्यमाना आञ्ज
आत्मका विद्या, त्रयोदश हनुमत् पीठानां च विपुलवर्णन मस्
हितायां प्रकाशिता एव । हनुमत् व्रत विधानः तत्सम्बधि मंत्र, तन्त्र
शद रूपेण वर्णिताः । तत् परिशीलनात् ज्ञायते भगवान् हनुमान् स्वीय
न रक्षण विषये अतीव श्रद्धालुः कृपालुश्च ।

ग्रन्थ संकलयित्रा यदभिहितं स्वीय गुरुचरणानां ब्रह्मश्री पाल
ट सुब्बावधानिनां सदुपदेशेन आदेशेन च ग्रन्थोऽयं, बहुधा संश
ोध्य च ग्रथितं इति तत् सर्वथा, सर्वदा सदुपकारकं अतीव श्रमैक सा
ति च ज्ञायते ।

अन्ततो गत्वा वयमाशास्महे, एतद् ग्रन्थ प्रकाशनेन ग्रंथकर्त्रोः आ
तं श्रमाच सफलाभूत्वा लोके अथ प्रचलिष्यंति आचन्द्रतारकं येन हनु
कानां मुमुक्षूणांच काम्याः पूर्णाः भविष्यन्तीति । एतन्महाभाग
ोपकारपरायण चित्तानां च जीवनं धन्यं, सफलं, स्तुत्यं च इति ।

।। इति शम् ।।

इत्थम्
बुधजन विधेयः
जोस्युल सूर्यप्रकाश र
(विश्रांत) आचार्यः
काशी हिंदू विश्वविद्याल
वाराणसी-५.

ादशाहरा
.-६-९७
ाणसी

'NYAYA VIDYA PRAVEENA'
'VEDANTACHARYA'
Dr. Gabbita Anjaneya Sastry,
Reader :
Vaidic Darshan Department
Sanskrit Learning & Theology
Banaras Hindu University
V A R A N A S I - U. P.

# प्रशंसा

श्रीमद्भिः अन्नदानं चिदम्बर शास्त्रि महाशयैः प्रकाशि
राशर संहिता ग्रन्थः हनुमद्देवता चरितात्मकः मया सम
ोकितः । ग्रंथोऽयं पराशर मैत्रेय संवादात्मकः । ग्रंथान्त
ष्वप्यत्रोपलभ्यमाना हनूमद्विषयका विषयानोपलभ्यन्त इ
न्थस्यास्य वैशिष्टयम् । ईदृशस्य महतः ग्रन्थस्य प्रकाश
ीमन्तः हनुमद्भक्ताग्रेसराः अन्नदानं चिदम्बर शास्त्रिणः मह
पकारं हनुमद्भक्ताना मन्येषाञ्चाकार्षुरिति कथनं नाऽतिशयोक्त
ह मिति मोमुद्यते मे चेतः । आस्तिकजनाः इमं ग्रन्थ मर्ध
हिकामुष्मिकफल परम्परा मनुभविष्यन्ति हनुमत्कृप ं
वश्वसिमि ।

*

निवेदयिता

गब्बिट आञ्जनेयशा

ाराणसी

१९-६-१९९७

# FOREWORD

Ancient Indian literature is so vast that th
s much that has not yet seen the light of the d
Nowadays some books that have been useful
he common man through the ages are gradua
oming to light. To that order of rare and use
ooks belongs this "PARASARA SAMHITA".

The life of Hanuman is indeed wide in sco
ny, it is definite: Hanuman is immortal. In all a
ve find references to Hanuman. Through Valm
Ramayana the biography of the dedicated serv
onparallel of Lord Rama in the age of 'Thre
lone reached the world. However, it can't be s
hat immortal Hanuman had no other history
ides this. The great sage Parasara illumines th
nknown aspects in the "Parasara Samhita
'Vasishtasmat Pitamaha"—lines like 'Vasisht
y grand father clearly indicate the author as
age Parasara, the father of Bhagavan Vyasa. Fr
mes immemorial this compendium (Samhita) 
ormant in the archieves of the devotees of Lo
anuman in the form of Palm-leaf manuscrip
this compilation, besides the complete histo
Lord Hanuman, one could find a great deal
antra Sastra related to Lord Hanuman. This
effort to place before the public the great bo
ARASARA SAMHITA.

The great composer TallaPaka Annamachar
ade use of this compendium in many of his hym
or example, the hymn 11-1-148 has its source

ıe 31st chapter of Parasara Samhita. The hyn 1-1-149 and 11-1-366 can be traced to the chapt 4, 45, 46 and 47: While hymns 31 and 163 re o chapters 48 and 50. The great poet Pushpag Timmana, the author of "SAMIRA KUMA] VIJAYA" also followed Parasara Samhita. Parasara Samhita we find evidence to prove tl he Anjanadri in Tirumala is the birth place of L njaneya This book dispels doubts regardig va us controversial issues like the birthday of L Hanuman, his hirth place etc. Sri Prahhuda Brahmachari is delighyed with the book and to copy to his Ashram.

Jagadguru Srimath Abhinava Vidya Tirt Maha Swamy, the head of Shringeri Peetha a ther eminent scholars like Sri Tadepalli Ragha Narayana Sastry, Sri Jammalamadaka Madha ama Sarma, Sri Mudigonda Venkata Rama Sast ri Maddulapalli Manikya Sastry, and Sri R aran heaped praise on this great compilation. \ n find referances to Parasara Samhita in gre ooks liko Sri "Hanuman Maha Vidya Prakasik c, The author of the famous book "Ramaya roddhara" quoted slokas from Parasara Samhi any modern authors too accept the authority rasara Samhita.

It is sad that such a great book has not com tely come to light even today. We have be athering available parts from all corners wi eat difficulty in an endeavour to place the enti ok before the public This effort to bring tl eat "Hanumat Sastra" within the reach of

eople-of different regions and languages is un
aken with-the fond hope that it would prom
nore research and a deeper study in this fiel
'ncerely hope that you would all endeavour
ropagate this book in the way that provide
night direct your thoughts, and enrich your li
. the service of ancient literature in general
literature regarding Hanuman. In particul

For the benefit of the reader a brief introductic

Once upon a time sage Maitreya enquired of
reat sage Parasara about the succour and sor
f relief to the suffering humanity in the fright
ge of Kali. In answer Parasara gave an exposi
f the greatness of Lord Hanuman. It forms
re of the Parasara Samhita. The importanc
Ianumat Vidya and the way of communicatin
d all the mantras related to Anjaneya's seven
antratmika Vidya are dealt with. Theway
ould see Lord Hanuman in his dreams, importa
f Hanumad Vratha, the birth of Hanuman and
pisode about the transformation of the glow of
un into the maiden Suvarchala are describec
reat detail. The Yantra of Hanuma, the efficac
evotion and the mercy of Lord Hanuma besides
istory of the 13 Hanumath Peethas are narra
he stay of Hanuman on the mountain Gan
Iadana His Journeys on his camel and how theL
otects his devotees and punishes the evil doers
arrated with many examples. Sri Hanuman m
antra which destroys enemies and which ful
esires and unshackles all bonds find its full ex
tion in the Samhita. The time. place, postu

nd flowere leaves and fruits suitable for worsl re dealt with at length. The importance of worsl the plantain orchards, the saligrama of Hanu nd the power of Hanuma in controlling epidem ke Cholera are explained. In the episode relat music we find Hanuman creating the raga Gur riya" Thus, we find a copmlete history of L anuma through the ages will all Mantras, Tantr nd Yantras in this magnum opus the Paras mhita.

## My Great Teacher

rahmasree Palaparthi Venkata Subbavadhanulu G great upasaka (practitioner) of Hanuman man fter initiating me, handed over a small section e manuscript of Parasara Samhita. He told me ather the complete work-however difficult ight be - and to bring it to light. It is nothing b e strength of his will and blessings that I h et many devotees of Hanuman, gather differ arts and could being it to the present form. I ver greatful to all there great devotees who ha elped me in this venture.

Above all, I express my sincere thanks to t Government Oriental Manuscript Library, Ada here I could secure a major part of Paras amhita, In this there are 611 palm leaves. T ondition of the book was old and (R 3317) inju d it has 65 patalas. However, It too had so issing portions(patalas 25 to 28, & 54 to 57). I othing but the blessing of Lord Hanuma that ook in the present form could be brought out ast.

I humbly bow in reverence at the lotus feel
i Sri Sri Siva chidananda Bharathi Swamy, h
Kurtalam Peetham for his blessings.

I thank Brahmasri Maddulapalli Manik
istry garu, Prof. S. B. Raghunadhacharya, P.
illela Sri Ramachandrudu, Brahmasri Josy
rya Prakasa Rao, Brahmasri Gabbeta Anjan
istry garu and many others who have b
acious enough to bless this endeavour by send
eir blessings and opinions. I thank the schol
d men of letters who have encouraged me in
rk and those who have supported me so genero
with their manificence.

I express my sincere gratitude to Sri R.
shagiri Rao who has lent me a helping hand
is venture.

With a humble supplication to Lord Hanuma
ower His infinite Grace on us so that His w
ty be fulfilled through us.

In the service of Lord Hanuma —

Annadanam Chidambara Sas

# विषय सूची

मातृदेवो भव



पितृदेवो भव



श्लो।। ईदृग्देहप्रदातारौ
भक्त्या प्रत्यक्ष दैवते
नमामि सीतारामांवा
लक्ष्मीनारायणाह्वयौ ।।

आचार्यदेवो भव



श्लो।। वेदमन्त्रागमादिज्ञं
पालपर्त्यन्वयोद्भवं
गुरुं च सुमुखं पूज्यं
वन्दे सुब्बावधानिनम् ।।

ॐ

श्रीराम — जय हनुमान्



# श्री पराशर संहित

## श्री आंजनेय चरितम्

### *त्रिसप्ततितमः पटलः*

-: श्री पञ्चमुख हनुमत् हृदयम् :-

श्री पराशरः ।

श्लो ।। शृणु मैत्रेय विप्रेंद्र हनुमन्मंत्र साधनम्
मंत्रं सांगं जपे द्यस्तु - तस्य सिद्धिर्नसंशयः ।।
स एव सिद्धिदं चैव - स एव फलदं तथा
तद्धि नित्यपुरश्चर्या - सर्वसाधन मुत्तमम्
हृदयं, पञ्जरं, स्तोत्रं - पूर्वस्यांगानि वै मुने!
माला कवच स्तोत्राणि - उत्तरांगाः प्रकीर्तिताः ।।

व. श्री पंचवक्त्र हनुमत् हृदयस्य ऋषि श्चैव श्रीराम च
भगवान् छंदोऽनुष्टुप् तथा प्रोक्ता ।
मंत्रोक्ता देवताश्च । ओं बीजं । रुद्रमूर्तये शक्ति: प्रोक्ता
स्वाहा कीलकम् । प्रसादे च विनियोग: ।
ह्रा मित्यादि षडंगानि भूरित्यादिभि र्दिग्बंधनम् ॥

ध्यानम् :-

ध्याये द्बालदिवाकर द्युति निभं देवारि दर्पापहम्
देवेंद्र प्रमुख प्रशस्त यशसं देदीप्यमानं रुचा
सुग्रीवादि समस्त वानरयुतं सुव्यक्त तत्त्वप्रियम्
संरक्तारुण लोचनं पवनजं पीतांबरालङ्कृतम् ॥
ओं नमो वायुपुत्राय - पञ्चवक्त्रायते नमः
नमोऽस्तु दीर्घ बालाय - राक्षसांतकराय च ॥
वज्रदेह! नमस्तुभ्यं - शतानन मदापह!
सीता संतोषकरण! - नमो राघवकिंकर! ॥
सृष्टि प्रवर्तक नमो - महास्थित नमोनमः
कला काष्ठ स्वरूपाय - मास संवत्सरात्मक ॥
नमस्ते ब्रह्मरूपाय - शिवरूपायते नमः
नमो विष्णुस्वरूपाय - सूर्यरूपाय ते नमः ॥
नमो वह्निस्वरूपाय - नमो गगनचारिणे ॥
सर्वरम्भावन चर! - अशोकवन नाशक!
नमो कैलासनिलय मलयाचल संश्रय!
नमो रावणनाशाय इंद्रजि द्वधकारिणे
महादेवात्मक नमो - नमो वायुतनूभव ॥
नम स्सुग्रीवसचिव! - सीता संतोषकारण!
समुद्रोल्लघन नमो - सौमित्रेः प्राणदायक!

महावीर! नमस्तुभ्यं - दीर्घबाहो! नमोनमः
दीर्घवाल नमस्तुभ्यं - वज्रदेह! नमो नमः ॥
छायाग्रह हर नमो - वर सौम्यमुखेक्षण!
सर्वदेव सुससेव्य - मुनिसंघ नमस्कृत!
अर्जुनध्वज संवास! कृष्णार्जुन सुपूजित
धर्मार्थ काम मोक्षाख्य पुरुषार्थ प्रवर्तक!
ब्रह्मास्त्र वद्य भगवन् - आह् तासुरनायक!
भक्त कल्पमहाभूज! - भूत भेताल नाशक! ॥
दुष्टग्रह् हरानत! वासुदेव नमोस्तुते
श्रीरामकार्ये चतुर! पार्वतीगर्भ संभव!
नमः पपावन चर - ऋष्यमूक कृतालय!
धान्यमाली शापहर - कालनेमि निवर्हण! ॥
सुवर्चला प्राणनाथ - रामचन्द्र परायण!
नमो वर्णस्वरूपाय - वर्णनीय गुणोदय! ॥
वरिष्ठाय नमस्तुभ्यं - वेदरूप नमोनमः
नमस्तुभ्यं नमस्तुभ्यं - भूयो भूयो नमाम्यहम् ॥
इति ते कथित देवि हृदयं श्रीहनूमतः
सर्वसपत्कर पुण्य - सर्वसौख्य विवर्धनम् ॥
दुष्टभूत ग्रह हर - क्षयापस्मार नाशनम् ॥
य स्त्वात्मानियमो भक्त्या - वायुसूनो सुमंगलम्
हृदयं पठते नित्यं - स ब्रह्म सदृशो भवेत् ॥
अजप्तं हृदयं यो यः - मंत्रं जपति मानवः
स दुःखं शीघ्र माप्नोति - मत्रसिद्धि न जायते ॥
सत्यं सत्यं पुनः सत्यं - मंत्रसिद्धिकर परम्

इत्थं च कथितं पूर्वं - सांबेन स्वप्रियां प्रति ॥
महर्षेः गौतमात् पूर्वं - मया प्राप्त मिदं मुने!
त न्मया प्रहितं सर्वं - शिष्यवात्सल्य कारणात् ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री पञ्चमुख हनुमद् हृदयं नाम त्रिसप्ततितमःपटलः

*  *  *

# श्री पराशर संहिता

## चतुस्सप्ततितमः पटलः

### -ः हनुमत्पञ्जर कथनम् :-

पराशरः :-

॥ पंजरन्तु प्रवक्ष्यामि - शृणु मैत्रेय ! आदरात् ॥

अस्य पंजरस्य ऋषिः श्रीरामचन्द्र भगवा निति च। छन्दोऽनुष्टुप्। श्री पञ्चवक्त्र हनुमान् देवतेतिच। ह्रां बीजम् स्वाहा शक्तिः। प्रणवो कीलकं स्मृतः। मंत्रोक्त देवता प्रसाद सिध्यर्थे विनियोगः। दीर्घयामाययायुक्तैःषडङ्गैःपरिकीर्तितः। रामदूत, वानरमुख, वायुनन्दन तथा नृसिंहमुखपूर्वकं अञ्जनासूनुः परंच। गरुडमुखच तथा हरिमर्कट पदंपरम्। क्रोडमुखं. पदंचान्तं रामकार्य धुरंधरः। ततो अश्वमुखंचान्तं। सर्वराक्षस नाशनः। सर्वमुख शब्दांताः सर्व चतुर्थ्यं तं गताः। षड़ंगे करांगादयो ह्रां षट्कादिभि स्संयुतं। न्यसे त्सर्वं मनन्यधीः। ततो ध्यानं पठित्वातु पूर्वोक्तमार्गतो वापि पंजर मारभे त्ततः ॥

आदौ प्रणव मुच्चार्य - वन्दे हरिपदं ततः
उच्चार्य मर्कटपदं - मर्कटायेति चोच्चरेत् ॥
अग्निजायां समुच्चार्य - द्वादशार्णो महामनुः॥
शिरः पातु मम सदा - सर्वसौख्य प्रदायकः ॥
आदौ प्रणव मुच्चार्य - कपिबीजं ततोच्चरेत्
नृसिंहबीज मुच्चार्य - गारुडंच समुच्चरेत् ॥
वराहबीज मुच्चार्य - हयग्रीवं ततोच्चरेत्
नमः पदं ततोच्चार्य - स पञ्चास्य महाकपेः
चतुर्दशार्णं मन्त्रोऽयं - मुखं पाया त्सदा मम ॥
आदौ प्रणव मुच्चार्य - नमो भगवते पदम्
पञ्चवदनाय चोच्चार्य - पूर्वमुखेति चोच्चरेत् ॥
वानरं बीज मुच्चार्य - कपिमुखाय चोच्चरेत्
सर्व शत्रुहरायेति - महाबलाय चोच्चरेत् ॥
अग्निजायां ततोच्चार्य सप्तत्रिंशाक्षराभिधः
कंठ मम सदा पातु - सर्वशत्रु विनाशकः ॥
उच्चार्य प्रणवं चादौ - नमो भगवतेतिच
नारसिंह महाबीज - करालपद मुच्चरेत् ॥
नृसिंहाय पदं चोक्त्वा - सकलभूत प्रेतच
पिशाच ब्रह्मराक्षस - प्रमथनाय पदं वदेत् ॥
अग्निजायां ततोच्चार्य - वसु वेदार्णको मनुः
हृदयं मे सदा पातु - सर्वशत्रु विनाशकः ॥
ओं नमो भगवतेति - पञ्चवदनाय ततः
पश्चिममुखेति चोच्चार्य - गारुड बीज मुच्चरेत् ॥
वीरगरुडाय महा - बलायेति पदं ततः
सर्वनाग प्रमथना - यांते सकलविषेति ॥

हराय स्वाहा त्वं ततः - वेदाभ्यक्षर संयुतः
हनुम न्ममोदरं पातु - सर्वरोग निबर्हणः ।।
ओं नमो भगवतेति - पञ्चवदनाय ततः
उत्तरमुखे चोच्चार्य क्रोड वाग्बीज मुच्चरेत्
आदिवाराह सर्वसंपत् - प्रदाय निधि भूमिच
प्रदाय पश्चाज्ज्वरेति - रोग निकृन्तन स्वाहा ।।
नाभि पातु मम सदा - सुखसौभाग्य हेतुकः
नेत्र बाणार्णको मनोः - पश्चात्प्रणव मुच्चरेत् ।।
नमो भगवते पञ्च - वदनाय पदं ततः
ऊर्ध्वमुखे त्ययंते - हयबीजं ततः परम् ।।
हयग्रीवाय सकल - प्रदाय सकलेतिच
जन वशीकरणाय - सकल दानवांतकाय ।।
पश्चा त्प्राज्ञाय स्वाहेति - षट्पञ्चाश द्वर्णको मनुः
मम जानुद्वयं पातु - सर्वराक्षस नाशकः ।।
ओं च ह्रीं मित्ययं चोक्त्वा - नमो भगवते ततः
ब्रह्मास्त्र संहारकाय - राक्षसकुल नाशयेति ।।
पताक हनुमतेति - मायाबीजत्रयं ततः
क्रोडास्त्र वह्निजायां तं - मनुः पादद्वयंमम ।।
ह्रां नमः पञ्चवक्त्राय - नाभिदेशं सदा मम
ह्रीं नमः पञ्चवक्त्राय - पातु जंघद्वयं मम ।
ह्रूं नमः पञ्चवक्त्राय - पातु जानुद्वयं मम
ह्रैं नमः पञ्चवक्त्राय - पादद्वंद्वं सदावतु ।
ह्रौं नमः पञ्चवक्त्राय - कटिदेशं सदावतु
ह्रः नमः पञ्चवक्त्राय - चोदरं पातु सर्वदा ।
ऐं नमः पञ्चवक्त्राय - हृदयं पातु सर्वदा
क्लां नमः पञ्चवक्त्राय - बाहुयुग्मं सदावतु ।

क्लीं नमः पञ्चवक्त्राय - करयुग्मं सदामम ।
क्लूं नमः पञ्चवक्त्राय - कण्ठदेशं सदावतु ।
क्लैं नमः पञ्चवक्त्राय - चुबुकं मे सदावतु ।
क्लौं नमः पञ्चवक्त्राय - पातु चोष्ठद्वयं मम ।
क्लः नमः पञ्चवक्त्राय — नेत्रयुग्मं सदावतु ।
रां नमः पञ्चवक्त्राय - श्रोत्रयुग्मं सदावतु ।
रीं नमः पञ्चवक्त्राय - फालं पातु महाबलः ।
रूं नमः पञ्चवक्त्राय - शिरः पाथा त्सदा मम
रैं नमः पञ्चवक्त्राय - शिखां मम सदावतु ।
रौं नमः पञ्चवक्त्राय - मूर्धानं पातु सर्वदा ।
रः नमः पञ्चवक्त्राय - मुखं पातु सदा मम ।
क्ष्रां नमः पञ्चवक्त्राय - श्रोत्रयुग्मं सदावतु ।
क्ष्रीं नमः पञ्चवक्त्राय - नेत्रयुग्मं सदा मम ।
क्ष्रूं नमः पञ्चवक्त्राय - पातु चोष्ठद्वयं मम ।
क्ष्रैं नमः पञ्चवक्त्राय - भ्रूयुग्मं पातु सर्वदा ।
क्ष्रौं नमः पञ्चवक्त्राय - नासिकां पातु सर्वदा ।
क्ष्रः नमः पञ्चवक्त्राय - कंठं पातु कपीश्वरः ।
ग्लां नमः पञ्चवक्त्राय - पातु वक्षस्थलं मम ।
ग्लीं नमः पञ्चवक्त्राय - बाहुयुग्मं सदा मम ।
ग्लूं नमः पञ्चवक्त्राय - करयुग्मं सदावतु ।
ग्लें नमः पञ्चवक्त्राय - मम पातु वलित्रयं ।
ग्लौं नमः पञ्चवक्त्राय - चोरदं पातु सर्वदा ।
ग्लः नमः पञ्चवक्त्राय - नाभिं पातु सदा मम ।
आं नमः पञ्चवक्त्राय - वानराय कटिं मम ।
ईं नमः पञ्चवक्त्राय - ऊरुयुग्मं सदावतु ।
ऊं नमः पञ्चवक्त्राय - जानुद्वन्द्वं सदा मम ।

ऐं नमः पञ्चवक्त्राय - गुल्फद्वंद्वं सदावतु ।
औं नमः पञ्चवक्त्राय - पादद्वन्द्वं सदावतु ।
अ: नमः पञ्चवक्त्राय - सर्वांगानि सदावतु ।
वानरः पूर्वतः पातु - दक्षिणे नरकेसरिः
प्रतीच्यां पातु गरुडः - उत्तरे पातु सूकरः
ऊर्ध्वं हयाननः पातु - सर्वतः पातु मृत्युहा ।
वानरः पूर्वतः पातु - आग्नेय्यां वायुनन्दनः
दक्षणे पातु हनुमान् - निर्ऋते केसरीप्रियः ।।
प्रतीच्यां पातु दैत्यारिः - वायव्यां पातु मंगलः
उत्तरे रामदासस्तु - निम्नं युद्ध विशारदः ।।
ऊर्ध्वे रामसखः पातु - पातालेच कपीश्वरः
सर्वतः पातु पञ्चास्यः - सर्वरोग विकृन्तनः ।।
हनुमान् पूर्वतः पातु - दक्षिणे पवनात्मजः
पातु प्रतीचि मक्षघ्नो - उदीच्यां सागरतारकः ।।
ऊर्ध्वं केसरीनन्दनः - पा त्वधस्ता द्विष्णुभक्तः
पातु मध्यप्रदेशेतु - सर्वलंका विदाहकः ।।
एवं सर्वतो मां पातु - पंचवक्त्रः सदा कपिः
सुग्रीवसचिवः पातु - मस्तकं मम सर्वदा
वायुनन्दनः फालं मे - महावीरः भ्रूमध्यमम् ।।
नेत्रे छायापहारीच - पातु श्रोत्रे प्लवंगमः
कपोलौ कर्णमूलेच - पातु श्रीरामकिंकरः ।।
नासाग्र मंजनासूनुः - पातु वक्त्रं हरीश्वरः
पातु कंठच दैत्यारिः - स्कधौ पातुसुरार्चितः ।।
जानौ पातु महातेजः - कूर्परौ चरणायुधः
नखान् नखायुधः पातु - कक्षं पातु कपीश्वरः ।।

सीताशोकापहारीतु - स्तनौ पातु निरंतरम्
लक्ष्मण प्राणदाताऽसौ - कुक्षि पा त्वनिशं मम ॥
वक्षौ मुद्रापहारीच - पातु पार्श्वे भुजायुधः
लंखणीभंजनः पातु - पृष्ठदेशे निरंतरम् ॥
नाभिच रामदासस्तु - कटिं पा त्वनिलात्मजः
गुह्यं पातु महाप्राज्ञः - सन्धौ पातु शिवप्रियः ॥
ऊरूच जानुनी पातु - लंकाप्रासाद भंजनः
जघौ पातु कपिश्रेष्ठः - गुल्फौ पातु महाबलः ॥
अचलोद्धारकः पातु - पादौ भास्करसन्निभः
अङ्गा न्यमितसत्वाढ्यः - पातु पादांगुलि स्सदा ॥
सर्वांगानि महाशूरः - पातु मां रोमवान् सदा
भार्यां पातु महातेजः - पुत्रान् पातु नखायुधः
पशून् पञ्चाननः पातु - क्षेत्रं पातु कपीश्वरः
बन्धून् पातु रघुश्रेष्ठः - दासः पवनसंभवः ॥
सीता शोकापहारी सः - गृहान् मम सदावतु ॥
हनूम त्पंजरं यस्तु - पठे द्विद्वान् विचक्षणः
स एष पुरुषश्रेष्ठो - भक्ति मुक्तिच विंदति ॥
कालत्रयेऽप्येककाले - पठे न्मासत्रयं नरः
सर्वे शत्रून् क्षणे जित्वा - स्वयंच विजयीभवेत् ॥
अर्धरात्रौ जले स्थित्वा - सप्तवारं पठे द्यदि
क्षयापस्मार कुष्ठादि - तापज्वर निवारणम् ॥
अर्कवारेऽश्वत्थमूले - स्थित्वा पठति यः पुमान्
स पुमान् श्रियमाप्नोति - सग्रामे विजयीभवेत् ॥
अनेन मंत्रितं चापि - यः पिबेत् रोगपीडितः
स नरो रोगनिर्मुक्तः - सुखी भवति निश्चयः ॥

यो नित्यं ध्याये द्यस्तु - सर्वमन्त्र विनिर्मितम्
तं दृष्ट्वा देवता स्सर्वे - नमस्यंति कपीश्वरम् ॥
राक्षसास्तु पलायंते - भूता धावन्ति सर्वतः ॥
इदं पञ्जर मज्ञात्वा - यो जप न्मंत्रनायकम्
न शीघ्रं फल माप्नोति - सत्यं सत्यं मयोदितम् ॥
त्रिकाल मेक कालं वा - पञ्जरं धारये च्छुभम्
पञ्जरं विधिवज्जप्त्वा - स्तोत्रैः वेदांत सम्मितैः
तोषये दञ्जनासूनुं - सर्वराक्षसमर्दनम् ॥
इतीदं पञ्जरं यस्तु - पञ्चवक्त्र हनूमतः
धारयेत् श्रावये द्वापि - कृतकृत्यो भवेन्नरः ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री पञ्चमुख हनुमत्पंजरं नाम चतुस्सप्ततितमः पटलः

* * *

## श्री पराशर संहिता

### *पञ्चसप्ततितमः पटलः*

—: श्री हनुमदष्टोत्तरशतनाम स्तोत्रम् :—

श्री पराशरः :—

श्लो ॥ शृणु मैत्रेय! मंत्रज्ञ! - अष्टोत्तरशत संज्ञिकः
नाम्नां हनूमतश्चैव - स्तोत्रणां शोकनाशनम् ॥
पूर्वं शिवेन पार्वत्याः - कथितं पापनाशनम्
गोप्या द्गोप्यतरं चैव - सर्वेप्सित फलप्रदम् ॥

ऋषि स्सदाशिवः प्रोक्तो - छंदोनुष्टु ब्रुदाहृतः
हनूमान् देवता प्रोक्तो - ह्रां बीज मिति च स्मृतः
ह्रीं शक्ति ह्रूं कीलकं च - प्रसादे च विनियोगः ॥

ध्यानम् :-

ध्याये द्बाल दिवाकर द्युति निभं देवारि दर्पापहम्
देवेंद्र प्रमुख प्रशस्त यशस देदीप्यमानं ऋचा
हस्ताब्जैरसि खेट पुस्तक सुधाकुंभां कुशाद्रीन् हलं
खट्वांगं फणि भूरुहं च दधत सर्वारि गर्वापहम् ॥
हनूमान् स्थिरकीर्तिश्च तृणीकृत जगत्त्रयः
सुरपूज्य स्सुरश्रेष्ठो - सर्वाधीश स्सुखप्रदः ॥
ज्ञानप्रदो ज्ञानगम्यो - विज्ञानी विश्ववंदितः
वज्रदेहो रुद्रमूर्ती - दग्ध लङ्का वरप्रदः ॥
इंद्रजिद्भयकर्ताच - रावणस्य भयंकरः
कुंभकर्णस्य भयदो - रमादासो कपीश्वरः ॥
लक्ष्मणानन्दकरो देवो - कपिसैन्यस्य रक्षकः
सुग्रीव सचिवो मन्त्री - पर्वतोत्पाटनो प्रभुः ॥
आजन्मब्रह्मचारीच - गंभीरध्वनि भीतिदः
सर्वेशः ज्वरहारीच - ग्रहकूट विनाशकः ॥
ढाकिनी ध्वंसक स्सर्व - भूत प्रेत विदारणः
विषहर्ताच विभवो - नित्य स्सर्व जगत्प्रभुः ॥
भगवा न्कुंडली दंडी - स्वर्णयज्ञोपवीतधृत्
अग्निगर्भ स्स्वर्णकांतिः - द्विभुजस्तु कृतांजलिः ॥
ब्रह्मास्त्रवारण श्शांतो - ब्रह्मण्यो ब्रह्मरूपधृत्
शत्रुहन्ता कार्यदक्षो - ललाटाक्षोऽपरेश्वरः ॥
लंकोद्दीपो महाकायः - रणशूरोऽमितप्रभः
वायुवेगी मनोवेगी - गरुडस्य समोजपे ॥

महात्मा विष्णुभक्तश्च - भक्ताभीष्ट फलप्रदः
संजीविनी समाहर्ता - सच्चिदानन्द विग्रहः ॥
त्रिमूर्ती पुंडरीकाक्षो - विश्वजि द्विश्वभावनः
विश्वहर्ता विश्वकर्ता - भव दुःखैक भेषजः ॥
वह्नितेजो महाशान्तो - चन्द्रस्य सदृशोभवः
सेतुकर्ता कार्यदक्षो - भक्तपोषण तत्परः ॥
महायोगी महाधैर्यो - महाबल पराक्रमः
अक्षहंता राक्षसघ्नो - धूम्राक्षवधकृन्मुने ॥
ग्रस्तसूर्यो शास्त्रवेत्ता - वायुपुत्रः प्रतापवान्
तपस्वी धर्मनिरतो - कालनेमि वधोद्यमः ॥
छायाहर्ता दिव्यदेहो - पावनः पुण्यकृतिशवः
लंकाभयप्रदो धीरो - मुक्ताहार विभूषितः ॥
मुक्तिदो भुक्तिदश्चैव - शक्तिद श्वामकरेति च
हरि निरंजनो नित्यो - सर्वपुण्य फलप्रदः ॥
इतीदं श्रीहरेःपुण्य - नामाष्टोत्तरं शतम्
पठनात् श्रवणा न्मर्त्यः - जीवन्मुक्तो भवे ध्रुवम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेयसंवादे
श्री हनुमदष्टोत्तरशत नाम स्तोत्रं नाम पञ्चसप्ततितमः पटल

* 卐 ॐ *

# श्री पराशर संहिता

## षट्सप्ततितमः पटलः

### -: श्री वानरगीता :-

श्री पराशर उवाच :-

श्लो ॥ शृणु मैत्रेय ! विप्रर्षे - स्तोत्रं श्री हनुमत्परम्
कृत सर्ववानरैश्च - श्री वानरगीताभिदम् ॥
स्तोत्रं सर्वोत्तमं चैव - हनुमत्तत्वदर्शनम्
सर्वमायाहरंचैव - आधि व्याधि विनाशनम् ॥
अगस्त्येन पुरा प्रोक्तं - सर्वेषां मुनिसन्निधौ
इंद्रेण याचितंचैतत् - लोकोपकरणेच्छया ॥
इंद्रोथ परिपप्रच्छ - सत्कृतं मुनिपुंगवम्
अगस्त्य च महात्मानं - आसीनं च सुखासने ॥
देवदेव भवांभोधेः - दुस्तरात्कलुषेंद्रियाः
जनाः कथं तरंतीह - तन्मे वद कृपानिधे ॥

श्री अगस्त्य उवाच :-

हनूमंतं कृतंस्तोत्रं - वानरै विमलात्मभिः
पठन्ति ये सदा मर्त्याः - तच्चित्ता विमलात्मकाः
तरन्ति भवपादोधिं - प्राप्नुवन्ति हरेः पदम् ॥
आयुः कीर्तिर्यशश्चैव - लभन्ते नात्र संशयः ॥

व. ओं अस्य श्री वानरगीता स्तोत्र मंत्रस्य । अगस्त्य ऋषिः । जगती च्छन्दः । श्री हनुमान् देवता । मारु इति बीजं । अंजनासूनुरिति शक्तिः । वायुपुत्र इति की श्री हनुमत्प्रसादसिध्यर्थे विनियोगः ।

ध्यानम् :–

> वामे जानुनि वामजानु मपरं - ज्ञानाख्य मुद्रान्वित
> हृद्देशे कलयन्नुतो मुनिगणै - रध्यात्मदक्षेक्षणः
> आसीनः कदलीवने मणिमये - बालार्ककोटि प्रभः
> ध्यायन् ब्रह्म परं करोतु मनसा - सुद्धि हनूमन्मम
> संजीव पर्वतोद्धार! - मनोदुःखं निवारय
> प्रसीद सुमहाबाहो - त्रायस्व हरिसत्तम

श्री सुग्रीवः :–

> सुवर्णशैलस्य गवांच कोटि - सतस्य कोटेश्च शतस्य
> दानस्य नै वास्ति समफल च - धृवं च तन्मारुति दर्श

श्री गन्धमादनः :–

> हनुमन्निति मे स्नानं - हनुमन्निति मे जपः
> हनुमन्निति मे ध्यान - हनुमत्कीर्तन सदा ।।

श्री सुषेणः :–

> रामभक्त चरिता कथामृतं - वायुतनय गुणानुकीर्त
> रामदास! तवपादसेवनं - संभवन्तु मम जन्म जन्मनि

श्री अंगदः :–

> माता सुवर्चला देवी - पिता मे वायुनन्दनः
> बांधवा हनुमद्भक्ताः - स्वदेशं भुवनत्रयम् ।।

श्री नीलः :–

> भक्त कल्पतरुं सौम्यं - लोकोत्तर गुणाकरम्
> सुवर्चलापतिं वन्दे - मारुतिं वरद सदा ।।

श्री गवाक्षः :–

वायुपुत्रेण महता - यद्य दुक्तं करोमि तत्
न जानामि ततो धर्मं - मद्धर्मं रक्षमां सदा ॥

श्री मैंदः :–

समीरसूते! सततं त्वं दाज्ञया
त्व दंशकः प्रेरित मानसेन्द्रियः
करोम्यहं यच्च शुभा शुभ प्रभो
त्व त्प्रीतये मत्कृत मस्तुत त्सदा ॥

श्री द्विविदः :–

रामादीनां रणेख्यातिं - दातुं यो रावणादिकान्
नावधी त्स्वयमे वैक - स्तं वंदे हनुमत्प्रभुम् ॥

श्री शरभः :–

भौमस्य वासरे पूजा - कर्तव्या हनुमत्प्रभोः
भवे त्स श्शुचि रायुः श्श्रीः - पुत्र मित्र कलत्रवान्

श्री गवयः :–

आमिषीकृतमार्तांडं - गोष्पदीकृत सागरम्
तृणीकृत दशग्रीवं - आंजनेयं नमाम्यहम् ॥

श्री प्रहस्तः :–

उल्लंघ्य सिंधो स्सलिलं सलीलं
यश्शोक वह्निं जनकात्मजायाः
आदय तेनैव ददाह लंकाम्
नमामि तं प्रांजलि रांजनेयम् ॥

श्री नलः :-

नमाम्यहं वायुज पादपंकजं
करोमि त द्वायुज पूजनं सदा
वदामि वातात्मज नाम मंगलं
स्मरामि वायोर्भव कीर्तनं शुभम् ।।

श्री धर्मकः :-

सप्तषष्टिर्हतान् कोटि - वानराणां तरस्विनाम्
य स्सन्जीवनयामास - तं वन्दे मारुतात्मजम् ।

श्री गजः :-

लनी बालपाशः पिता पार्वतीशः
स्फुर द्बाहुदण्डौ मुखेवज्रदंष्ट्रा
सती चांजना यस्य माता ततोऽन्यम्
न जाने न जाने न जाने न जाने ।।

श्री ऋक्षरजसः :-

बुद्धिर्बलं यशोधैर्यं - निर्भयत्व मरोगता
अजाड्यं वाक्पटुत्वंच - हनुमत्स्मरणा द्भवेत् ।।

श्री संपातिः :-

सीता शोकस्य नाशाय - श्रीरामे शोकनाशनम्
साधकानां सुखं धन्यं - वयुसूनुं नमाम्यहम् ।।

श्री वेगवान् :-

अञ्जना वरपुत्राय - रामेष्टाय हनूमते
सर्वलोकैक वीराय - भवष्य द्ब्रह्मणे नमः ।।

श्री स्कंधग्रीवः :-

हनुमत्सदृशं दैवं - नास्ति नास्तीति भूतले
तं पूजयन्ति सततं - ब्रह्मा गौरी महेश्वराः ॥

श्री दधिमुखः :-

आलोड्य वेद शास्त्राणि - सर्वा ण्यपि महर्षिभिः
इद मेकं सुनिर्णीतं - नदैवं हनुमत्परम् ॥

श्री सुदंष्ट्रः :-

मंगलं हनुम न्नित्यं - मंगलं कपिपुंगव!
मंगलं चाञ्जनासूनो! - मंगलं राघवप्रिय ॥

श्री ऋषभः :-

करुणारसपूर्णाय - जग दानंदहेतवे
कुक्षिस्थाखिल लोकाय - हनुमद्ब्रह्मणे नमः ॥

श्री पृथुः :-

दाता दापयिता चैव - संवाहान् रक्षक स्तथा
प्रेरक श्चानुमोदा च - कर्ता भोक्ता कपीश्वरः ॥

श्री जांबवान् :-

भुक्ति मुक्तिप्रदं नाम - विहाय हनुमन् तव
संसरति जना मूढाः - किं विचित्र मतःपरम् ॥

श्री ज्योतिर्मुखः :-

मत्प्रार्थना फल मिदं मम जन्मनश्च
नेच्छामि किंचि दपरं हनुमन् ! महात्मन् !
त्व द्दास दासजन पाद रजोनिकेत
मस्मि ह्वितो भवतु सेवकपारिजात ॥

श्री सुमुखः :–

रसने! रसशारज्ञ - मधु रास्वाद कांक्षिणि !
हनुम न्नाम पीयूषं - सर्वदा रसने पिब ॥

श्री गोलांगूलः :–

कुतो दुर्दिनं वा कुतो भौमवारः
कुतो वैधृति स्तस्य भद्रा कथं वा
कुतो वा व्यतीपात दोपक्षुतं वा
हनूम त्पदध्यान वीताशुभस्य ॥

श्री कुमुदः :–

आचारो भुवि पादाश्च - मार्गा श्च रसने त्वया
हनुम न्निर्मिता स्सन्ति - जनानां हीनता कुतः ॥

श्री शतबलिः :–

धन्योऽस्म्यनुगृहीतोऽस्मि पुण्योऽस्मि महतोऽस्म्यहम्
हनुमन् त्व त्पदांभोज सेवा विभव योगतः ॥

श्री केसरः :–

त्वत्तोऽन्यं शरणं नास्ति - त्व मेव मम रक्षकः
अतो मयि कृपादृष्ट्या - हनुमन् रक्ष मां सदा ॥

श्री मारीचः :–

सदा पापौघ निष्ठूतं - पापेषु हृष्टमानसम्
पापात्मानं महापापं - रक्ष मां मनुमत्प्रभो !

श्री तरुणः :–

हनुम दाज्ञया यच्च - भाति त द्भवति ध्रुवम्
य दभाति न त द्भाति - वृथा देहपरिश्रमः ॥

श्री गोमुखः :-

अपराध शतंनित्यं - कुर्वाणं मां नृशंसकम्
क्षमस्व दासबुद्धया त्वं - हनुमन् करुणानिधे ॥

श्री पनसः :-

हनुमतो न परं परमार्थतो
हनुमतो न परं परमार्थतः
इति वदामि जनान् परमार्थतो
न हि परं भवतात्र विचक्षणः ॥
इतीदं वानरप्रोक्तं - सर्वपापहरं वरम्
सर्वज्ञान प्रदं चैव - सर्वसौभाग्य वर्धनम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेयसंवादे
श्री वानरगीता नाम षट्सप्ततितमः पटलः

* 卐 ॐ *

# श्री पराशर संहिता

## सप्तसप्ततितमः पटलः

### -ः हनुमज्जयन्ति कथनम् ः-

श्री मैत्रेयः :-

श्लो ॥ कथं जयंत्यां हनुमान् - पूजनीयः पराशर!
विधिः को वा फलं किंवा - कालः को वा विशेषत
त त्सर्वं ब्रूहि भगवन् - लोकानां हितकाम्यया ॥

श्री पराशरः ।

साधु साधु महाप्राज्ञ! - सम्य क्प्रश्नः कृत स्त्वया
य द्बुद्ध्वा त्यनेकानि - भुवनानि महामुने! ॥

वैशाखे मासि कृष्णायां - दशम्यां मंदवासरे
पूर्वभाद्राख्य नक्षत्रे - मुहूर्ते कर्कटाभिधे
मध्याह्ने वैधृतीयोगे - कुर्या त्पूजा हनूमतः ॥
गन्ध पुष्पाक्षतै र्दिव्यैः - नैवेद्यै विभवान्वितैः
नृत्य वाद्यादिभि स्सम्य - गर्चनीयो तदा हरिः ॥
गोमये नोपलिप्याऽथ - भूमिं निश्चल मानसः
रंगवल्लीन् ततः कुर्या - त्तंडुला स्तत्र निक्षिपेत् ॥
पञ्चाढक प्रमाण वा - प्रस्थ पञ्चक मेव वा
तदर्थं वा तदर्थं वा - वित्तशाठ्य न कारयेत् ॥
तंडुलोपरि संस्थाप्य - सौवर्ण कलशं सुधीः
राजितंवाऽपि ताम्रं वा - मृण्मय वाऽपि शक्तितः ।
नवीनं कलश कुर्यात् - निर्मलोदक पूरितम्
फलानिच सुपुष्पाणि - सुवर्ण तत्रनिक्षिपेत् ॥
नवांबर सुसंशोध्या - च्छादये त्कलशोपरि ॥
प्रतिमा कलशवस्त्रं च - होम ब्राह्मण भोजनम्
गुरुपूजनं च कर्तव्यं - सर्वत्र हनुमद्व्रते ॥
यथाशक्ति हिरण्येन - ताम्रेण रजतेन वा
हनुमद्विग्रहं धीमान् - कारयित्वा प्रयत्नतः ॥
पञ्चामृताभिषेकेन - स्नापयित्वा कपीश्वरम्
पीतांबरयुगं वाऽपि - हरिद्राक्तपटे तु वा ॥
धारयित्वा महाहेतु - रत्न सिंहासने शुभे
प्रच्छाद्य नूतनंवस्त्रं - स्थापये न्मारुतात्मजम् ॥
प्राणप्रतिष्ठां कुर्वीत - मूलमंत्र विधानतः
षोडशा नुपचारान्वै - ततः कुर्या द्यथाविधि ॥
सुवर्णकलशै र्युक्तं - पूगीफल समन्वितम्
अर्घ्यं दत्वा पञ्चवारं - पुष्पाक्षत समन्वितम् ॥

सदक्षिणां च तांबूलं - स वस्त्रं प्रतिमान्वितम्
गुरुं संपूज्य यत्नेन - वस्त्रालंकरणादिभिः
ब्राह्मणाय सुशीलाय - दानं दद्या त्कुटुंबिने ॥
जयती दिवसे पूजां - कृत्वा श्री हनुमत्प्रभोः
उपवासा यतेः प्रोक्ताः - गृहिणां भोजनं मतम् ॥
पूर्वाप्रोष्ठपदायुक्ता - जयंती दशमी तिथिः
अत्र नक्षत्र वैरूप्ये - तिथि रेव प्रयोजका ॥
वैशाखमासि यत्नेन - कुर्यात्कार्य मनुत्तमम्
असकृद्वा सकृद्वा ते - परांगति मवाप्नुयात् ॥
वैशाखे मासि माहात्म्यं - कल्पकोटि शतैरपि
न शक्य वर्णितुं ब्रह्मन् - ब्रह्मणोऽपि समंततः ॥
यत स्सुवर्चला नाथो - अञ्जनागर्भ संभवः
हनुमान् मारुति श्श्रीमान् - अवतीर्णो रिरक्षया ॥
तदा प्रभृति मासस्य - वैशाखस्य महात्मनः
स्नान दानादि योग्यत्वं - हनूम ज्जन्मकारणात् ॥
इति निश्चित्य मतिमान् - स्नाया द्बाह्यजलांतरे
संतर्पये त्पितॄ न्तत्र - दद्या द्विप्राय गोधनम् ॥
दापये दुदकं चान्न - हनूम त्प्रीतये तथा ॥
ब्राह्मणः क्षत्रियो वाऽपि - वैश्यो वा शूद्र एव वा
स्त्री वा पुमान् वा षंडो वा - यथाशक्ति निवेदयेत् ॥
ततस्तु हनुमान् प्रीतः - दद्या न्निज पदांतिकम्
तदा द्वादशवारं तु - जुहुया द्गोघृतेन च ॥
यथाशक्ति ब्राह्मणां श्च - भोजये दिष्टवस्तुभिः
आञ्जनेय प्रसादेन - सर्वा न्कामा नवाप्नुयात् ॥
रत्नसिंहासनं तत्र - हैमं भास्करसन्निभम्
निरस्तान्त स्तम स्तोमं - कल्पये न्मुनिपुंगव ॥

आवाहये द्धनूमन्तं - रत्नसिंहासने सुधीः
अथ ध्याये त्कपिश्रेष्ठ - चतुरावरणान्वितम् ॥
वामभागे स्थितां पत्नीं - सूर्यपुत्रीं सुवर्चलाम्
पश्यन्तं स्निग्धया दृष्ट्या - स्मितयुक्त मुखांबुजाम् ।
छत्र चामर संयुक्तं - नीलाद्यैश्च सुसेवितम्
मुक्ताहार गणोपेतं - रत्नकुण्डल भूषितम् ॥
ग्रैवेय भूषित ग्रीवं - कनकाम्बर धारिणम्
नाना मणि समुत्कीर्णं - किरीटोज्ज्वल शेखरम् ॥
मेखलादाम संवीतं - मणिनूपुर शोभितम्
रत्नकंकण विद्योत - पाणौ रक्तांबुज द्वयम् ॥
क्वथित स्वर्णवर्णांग - मुद्गध्वज समन्वितम्
चतुर्भुजधरं शांतं - सर्वव्यापिन मीश्वरम् ॥
सर्वदेव परीवारं - सर्वाभीष्ट फलप्रदम्
आवाहयामि सर्वेशं - सूर्यपुत्री प्रियं प्रभुम् ॥
देवदेव जगन्नाथ! - केसरि प्रियनन्दन!
रत्नसिंहासनं तुभ्यं - दास्यामि हनुमत्प्रभो ॥
योगिध्येयांघ्रिपद्माय - जगतां पतये नमः
पाद्यं मयार्पितं देव ! - गृहाण पुरुषोत्तम ! ॥
लक्ष्मणप्राणसंरक्ष - सीताशोक विनाशक!
गृहाणार्घ्यं मयादत्तं - पार्वती प्रियनन्दन ॥
वालाग्र सेतुबन्धाय - दशानन वधाय च
तुभ्य माचमनं दत्तं - प्रतिगृह्णीष्व मारुते ॥
अर्जुनध्वज संवास! - दशानन मदापह!
मधुपर्कं प्रदास्यामि - हनुम न्प्रतिगृह्यताम् ॥
गंगादि सर्वतीर्थेभ्यः - समानीतै र्नवोदकैः
भवन्त स्नापयिष्यामि - कपिनायक गृह्यताम् ॥

पीतांबर मिदं तुभ्यं - तप्तहाटक सन्निभम्
दास्यामि वानरश्रेष्ठ - संगृहाण नमोस्तुते ॥
ब्रह्मसूत्र मिदं भव्यं - मुक्तादामोपशोभितम्
स्वीकुरु त्वांजनीपुत्र! - भक्तरक्षण तत्पर!
उत्तरीयंतु दास्यामि - संसारोत्तारकारण!
गृहाण परमप्रीत्या - नतोऽस्मि तव पादयोः ॥
भूषणानि महार्हाणि - किरीटप्रमुखा न्यहम्
तुभ्यं दास्यामि सर्वेश! - गृहाण कपिनायक!
कस्तूरी कुम्कुमोन्मिश्रं - कर्पूरागुरु वासितम्
श्रीचंदनंतु दास्यामि - गृह्यतां हनुमत्प्रभो!
सुगंधीनि सुरूपाणि - वन्यानि विविधानिच
चपकादीनि पुष्पाणि - कमला न्युत्पलानिच ॥
तुलसीदल बिल्वानि - मनसा कल्पयामि ते
गृहाण हनुम न्देव - प्रणतोऽस्मि पदांबुजे ॥
शालीया नक्षता न्रम्यान् - पद्मरागसमप्रभान्
अखडान् खडितध्वांत - स्वीकुरुष्व दयानिधे ॥
कपिलाघृत संयुक्तं - कृष्णागुरु समुद्भवम्
मया समर्पितं धूपं - हनुमन् प्रतिगृह्यताम् ॥
निरस्ताज्ञान तिमिर - तेजोराशे जगत्पते
दीप गृहाण देवेश - गोघृताक्तं दशान्वितम् ॥
इदं दिव्यान्न ममृतं - सूप शाक फलान्वितं
साज्यं सदधि सक्षीरं - शर्करा मधु संयुतम् ॥
भक्ष्यं भोज्यंच लेह्यंच - चोष्यं चापि चतुर्विधम्
गृहाण हनुमन्भक्त्या - स्वर्णपात्रे निवेदितम् ॥
समर्पयामि पानीयं - मध्ये मध्ये सुधोपमम्
सच्चिदानंद रूपाय - सृष्टि स्थित्यंत हेतवे ॥

पूगीफल समायुक्तं - कर्पूरादि समन्वितम्
स्वर्णवर्ण दलोपेतं - तांबूलं गृह्यतां हरे ॥
नीराजन मिदं दिव्यं - मंगलार्थं कपिप्रभो
मया समर्पितं तात - गृहाण वरदो भव ॥
नृत्य गीतंच वाद्यंच - कृतं गंधर्वसत्तमैः
प्रकल्पयामि मनसा - सुप्रीतो वरदो भव ॥
मंदार पारिजातादि - पुष्पांजलि मिमं प्रभो!
स्वर्णपुष्प समाकीर्णं - मुष्ट्रध्वज गृहाणवै ॥
प्रदक्षिण नमस्कारान् - साष्टांगान् पञ्चसंख्यया
दास्यामि कपिनाथाय - गृहाणाभीष्टदायक!
देवदेवः जगन्नाथ! - पुराण पुरुषोत्तम!
अनेन पूजाविधिना - सुप्रीतो वरदो भव ॥
अन्त्ये दद्या त्प्रसन्नार्घ्यान् - यथा पूर्वं विनिर्मितान् ॥
दशम्यां मन्दयुक्तायां - कृष्णायां मासि माधवे
पूर्वाभाद्राख्य नक्षत्रे - वैधृतौ हनुमा न भूत् ॥
दुष्टानां शिक्षणार्थाय - शिष्टानां रक्षणाय च
श्रीरामस्वामि कार्यार्थं - जातश्श्रीहनुमान् हरिः ॥
अञ्जनागर्भ संभूत! - हनुमन्! पवनात्मज!
गृहाणार्घ्यं मयादत्तं - कपिवर्य नमोस्तुते ॥
वधार्थं रक्षसां जात - हनुमान् भक्तवत्सल
गृहाणार्घ्यं मयादत्तं - कपिवर्य नमोस्तुते ॥
जातः कपिकुलांभोधौ - स्वर्णरम्भा वनाश्रय!
भक्त संरक्षण स्वामिन् - गृहाणार्घ्यं नमोस्तुते ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री पञ्चमुख हनुमज्जयंति कथनं नाम सप्तसप्ततितमः पटलः

* * *

# श्री पराशर संहिता

## अष्टसप्ततितमः पटलः

### -: कवचयंत्र प्रभाव कथनम् :-

श्री पराशरः :-

श्लो ।। पार्वत्यै शंकरे णोक्तं - कवचंतु महद्धितम्
अत्यादरेण विप्रेंद्र ! - प्रोक्तं लोकहितायवै ।।

पार्वत्युवाच :-

देवदेव! जगन्नाथ! सर्वभूत वशङ्कर!
केन रक्षा भवेन्नृणां - भीतानां विविधापदैः ।।
मंगलच महापुण्य - पवित्रं पापनाशनम्
श्रोतु मिच्छामि देवेश! - वद मे करुणाकर! ।।
शृणु गुह्यतमं देवि! भक्तामय विनाशकम् ।।
सर्व संपत्करं गौरि - गोपनीयं प्रयत्नतः ।।
मदंशजो महातेजा - महाबल पराक्रमः
सुभग स्सुन्दर श्शूरः - शकरो भक्तवत्सलः ।।
विजयो विष्णुभक्ताढ्यो - रामदूतः कपीश्वरः
एवं प्लवंग रूपेण - जातोऽहं श्रुणु पार्वति! ।।
अजोहं लोकरक्षार्थं - रामदूतोऽस्मिचादरात्
वक्ष्यामि तस्य कवचं - सादरेण प्रिये श्रुणु ।।
प्रातस्स्नात्वातु विधिना - वस्त्राभरण भूषितः
प्रक्षाल्य पादावाचम्य - सुगध श्चोर्ध्वपुंड्रधृत् ।।
योगभूमिं प्रविश्याथ - तां संप्रोक्ष्यच विन्यसेत्
आसनं कल्पये त्प्राज्ञः - संध्यावन्दन माचरेत् ।।
गायत्रीं प्रजपेत् धीमान् - प्राणायामत्रयं चरेत्
कृत स्वांग करन्यासो - मंत्राभ्यां वाग्यतः शुचिः ।।

दैवभूतादि कर्मभ्यो - आंजनेयमयः पुमान्
पादयोर्जानु नोरूर्वो - रुदरेहृदिकंधरे
मुखेशिर स्यानुपूर्व्या - मोंकारादीनि विन्यसेत् ।।
ओं नमो राम दूता येति विपर्यय मथापिवा
करन्यासो बुधः कुर्यात् - द्वादशाक्षर विद्यया ।।
प्रणवादि यकारांतं - अंगुल्यंगुष्ठ पर्वसु
न्यसेद्धकारं हृदये - नुकारमनु मूर्धनि ।।
शिखायांतु मकारंच - तेकारं भुजयोरसि
नकार नेत्रयो युंज्य - मकारं स्वास्त्रमुद्दिशेत् ।।
सविसर्गं पठेन्नित्यं - सर्वदिक्षु विनिर्दिशेत्
मंत्रं न्यासं ततः कृत्वा - ध्यायेद्भक्त्या सुबुद्धिमान् ।।

ध्यानम् :-

बालार्क सन्निभं देवं - दिव्यकौपीन मुज्ज्वलम
दिव्य मौंजीधरं शांतं - दिव्यकुंडल धारिणम्
दिव्य यज्ञोपवीताढ्यं - दिव्याभरण भूषितम्
किंकिणीकटिसूत्रंच - केयूर वनमालिनम्
रुद्रावतार सेनाढ्यं - अंजनागर्भ संभवम्
भक्तानां भयहर्तारं - रामदूत नमाम्यहम् ।।
इतिस्तुत्वा हनूमतं - निश्चलः कवच पठेत् ।।

कवच प्रारंभः :

अस्यश्री कवचस्तोत्र मंत्रस्य । ईश्वर ऋषिः । अनुष्टुप्
श्री हनुमान् देवता । मारुतात्मज इति बीजं । अजन
रिति शक्तिः । रुद्रावतार इति कीलक । श्री हनुमत
सिध्यर्थे जपे विनियोगः ।।

कवच स्तोत्रम् ः

ओं नमो रामदूताय । अष्टाक्षराय । हनुमते न
षडक्षरोऽयम् ।

श्लो ॥ दिश मैंद्री मवतुमे - अन्जना प्रियनन्दनः ।
दिशमवतु आग्नेय्यां - लंकाप्रासाद भंजनः ।
याम्यां दिशिरक्षतुमे केसरी प्रियनन्दनः ।
नैऋती दिशमक्षघ्नः - पातुमे प्लवगाधिपः
पातु श्री वायुपुत्रो मे - वारुणीं दिशमव्ययः
सुग्रीवसचिवो नित्यं - पातुमे वायुवीं दिशम्
रुद्रावतारोऽ वतुमे - कौबेरी दिशमक्षहा
श्रीरामदूतोऽ वतुमे - ईशान्यां दिश मव्ययः
अथस्तात्पातुमे नित्यं - बालार्कत्रो वरदोहरिः
ऊर्ध्वंदिशि रक्षतुमे - शङ्करोऽमितविक्रमः
अन्तरिक्षं दिशंपातु - नीतिज्ञोमे महाकपिः
बाह्याभ्यंत दिशौपातु - पिंगाक्षोमेऽब्धिलंघनः
सुशिरोमे शिरःपातु - फालंमे पातुपावनिः
दृशौमेपातु सुदृशो - कर्णौपातु सुकर्णवान्
सुघ्राणः पातु घ्राणंमे - मुखंतु प्लवगाननः
सुजिह्वः पातु जिह्वांमे - कंठं पातु सुकंथरः
सुस्कंधः पातु मेस्कंधो - सुभुजोऽवतुमे भुजौ
सुकरोमे करौपातु - हृदयं सुहृदोमम
सुमध्यः पातुमे मध्यं - नाभितु सुनाभिवान्
कटिंमे सुकटिःपातु - ऊरू सुरूरुमान् मम
सुजानुः जानुनीपातु - जंघेपातु सुजंघवान्
सुपादः पातुमेपादौ - सुनखोमे नखानिच
अनुक्त सधिनीपातु - सर्वदाच सुसंधिमान्

सर्वांगानि च मेपातु - सर्वावयव शोभितः
संकटे विषमे दुर्गे - भये पारे महाहवे
निशायां संध्ययोः पातु - हनुमान् सर्वत स्सदा
जलेह्यग्नौ स्थितेचैव - वायुव्यंच गुहांतरे
नद्यां शैलेच विपिने - दवाग्नौ चोर संकटे
राजद्वारे सभास्थाने - शत्रुद्वारेच कृत्रिमे
पातु श्रीरामदूतोऽसौ - सदामां भक्तवत्सलः
सर्प वृश्चिक लूतादि विषेभ्यः पातुमां सदा
स्थावरं जंगमं चैव - कृत्रिमांश्च हरीश्वरः
नर वानर सिंहेभ - तरक्षु व्याघ्र भल्लुकात्
हिंस्रा द्वनचराध्यक्षा द्रक्षो गंधर्व किन्नरात्
भूतप्रेत गणाश्चैव - पिशाच ब्रह्मराक्षसात्
भेताल दनुजात्पातु सीताशोक विनाशनः
दुस्वप्ना त्सलिलात्पातु - दुष्कृताद्दुःख संकुला त्
अज्ञाना त्कर्मलोपाच्च पातुमां ब्रह्म पावनिः
परदारा त्परद्रव्या त्परदान परिग्रहात्
परचिंता परध्यान - परव्याधि भयाच्चमां
पातु प्रचंड दोर्दंड - आञ्जनेयो महाबलः
कर्मलोपा त्क्रियालोपा द्बुद्धि जाड्याच्च चंचलात्
आयुधात्कन्दनादस्त्रात्कारागाराच्च शृंखलात्
ताडना दौषधान्मंत्रा त्पातुमां ब्रह्मपावनिः

फलश्रुतिः :

श्लो ।। हनुमत्कवचं पुण्यं - सर्वसिद्धिकरं परम्
मृताना ममृतत्वाय - भीतानांच अभीतये
मोक्षायच मुमुक्षूणां - श्रीकामानां श्रियेतथा
विजयाय जिगीषूणां - व्याधितानां मरोगकृत्

वश्याय वश्य कामानां - विद्यायै वेदवादिनाम्
द्रविणाय दरिद्राणां - पापानां पापशांतये
वादिनां वाद विजयं - कवीनां कविताप्रदम्
अन्नाय क्षुधितार्तानां - स्वर्गाय स्वर्गमिच्छताम्
पशुदं पशुकामानां - पुत्रेभ्यः पुत्रकामिनां
दारेभ्यो कुलदाराणां - ज्ञानाय ज्ञानमिच्छतां
राज्याय भ्रष्ट राज्यानां - अशांतानांच शांतये
अमृत्यवे मृत्युभिया - मायुष्यं चायुरिच्छताम्
शतृक्षये शतृमता मन्वर्थायच योगिनाम्
भर्तृ वश्यायच स्त्रीणां - स्त्रीवश्याय नृणामपि
राजवश्याय कवचं - राजसन्निधि सेविनाम्
भक्त्यर्थ विष्णुभक्तानां - विष्णौ सर्वांत रात्मनि
विनायको विसृष्टानां - शांतये भवति ध्रुवम्
जप्तु स्त्रीवर्ग सिध्यर्थं - गृहस्थेन विशेषतः
मुनिभिः मौन सिध्यर्थं मोक्षाय परमायच
उद्यंतं चंड किरणं - उपस्थाय कृतांजलिः
कदलीकानने तिष्ठन्नासिनो वा जपन् दिवा
सर्वान्कामानवाप्नोति - अने नैव जपप्रिये ।
मम प्रीतिकरं दिव्यं - विष्णुभक्ति विवर्धनं
ज्वरार्तानां कुशाग्रेण - मार्जये त्कुष्ठरोगिणां
अंगमंगं यथालिंगं - कवचेनतु साधकः ॥
यस्या स्मृत प्रजायुक्ता - तस्यामंगंप्रमार्जयेत्
सापुत्रं लभते दीर्घ जीविनं चाप्यरोगिणम्
वंध्याया मार्जयेदंगं - कुशैर्मंत्रेण साधकः
सावै संवत्सरादर्वा ग्गर्भंधत्ते मनोहरम् ॥
पति विद्वेषिणीयातु - तस्या अंगं प्रमार्जयेत्
सातमेव भजेत्प्रीत्या - भर्तारं नान्यमानसा ॥

अश्वत्थे राजवश्यार्थी - जलमग्न मंहृदिच्छताम्
पालाशमूले विद्यार्थी - तेजसेऽभिमुखेरवेः ॥
कन्यार्थी चंडिकागेहे - शिवगेहे रिपुक्षयम्
श्रीकामो विष्णुगेहेच - मोक्षार्थी यत्रकुत्रच
किमत्र बहुनोक्तेन - सर्वान्कामा नवाप्नुयात् ॥
अन्यच्च कवचंवक्ष्ये - शृणु शैलसुते ! प्रिये !
गुह्याद्गुह्यतमं लोके मंगलानांच मगलम् ॥

कवच प्रारंभः :

हनुमान्पातुमे नित्यं - सिरवक्त्रोष्ठ नाशिकाः
कर्णौस्कधौ भुजौ वक्षौ - रामेष्टः पातु कक्षकौ
पृष्ठच जठरं सर्वं - स्तनौ जत्रुच हृत्कटि
हारः पातूदर नाभि - पार्श्वं हस्तांगुलीस्तथा
जाठरं वह्नि स्थानंतु गडं जघन गुह्यकम्
पावनिः पातुमे नित्य - ऊरुयुग्म सजानुकम्
आञ्जनासूनु मे पातु - जंघे पादौच सर्वदा
यदुक्तं यच्च नोक्तंमे - यद्बाह्ये यत्तदंतरम्
सर्वांगं पातु मे शूरो - लक्ष्मण प्राणदायकः ॥
य इदं कवच दिव्यं - आञ्जनेयस्य कामदम्
ध्यायेज्जपेद्भजेत्तस्य श्रीविद्यायुश्च वर्धते ॥

श्री यंत्र लक्षणम् :

प्राचीष्षडभिर्लिखेद्रेखोंदीचीषट्च तथाक्रमम्
सपंचविंशति स्तत्र कोष्टानांतु भविष्यति
कोष्टे कोष्टे अयं मंत्रो - साक्षराणि यथाक्रमम्

ग्रंथांतरे :

उदगग्रा लिखेद्रेखाः - स्थानं मूलंतु दक्षिणम्
प्रागग्राश्च लिखेद्रेखाः - स्थानं मूलंतु पश्चिमम्
प्रागग्रा मुदगग्रंच - समारभ्य लिखेद्बुधः
रेखापदेषुविलिखे त्कवचस्य पदं पदम् ।।
सौवर्णे रजते ताम्रे - तालपर्णेऽपि वा मुने
भूर्जे रोचनया विद्वान् - सोऽपि कुंकुम मिश्रया ।।
यस्तु यंत्र मिदं मूर्ध्नि - स्थितं कंठेतु धारयेत्
संग्रामे व्यवहारेन - चोर व्याघ्र भयेषुच
मारीभये विषभये - महाद्भुत प्रपीडने ।।
क्षयापस्मार पीडासु - सर्प वृश्चिक लूतके
तापनेतु तथा शोके - नेत्ररोगेच दुस्सहे ।।
नानाविध भयेष्वेव - नानाव्याधि प्रपीडने
विन्यस्य कवच यस्तु - मंत्रराजेन मंत्रितम् ।।
नतस्य दुरितं किंचि दिह चामुत्र चैवहि
वंध्यया धारये द्यंत्रं - अचिरा त्पुत्रिणी भवेत्
क्षुद्रसिध्द्यै ततोऽन्यस्यै - यस्तु प्रार्थयतेऽल्पधीः
पिपासतो सविहितो - मृगतृष्णां पिपासति ।।
वश्याकर्षण विद्वेष - स्तंभनोच्चाटनादिषु
कृत्वातु कवचं न्यासं - जपेन्मंत्रमनुत्तमम्
तथैव सर्वमाप्नोति - नात्रकार्या विचारणा
श्लोके श्लोके प्रकुर्वीत - होमं तर्पण मेवच
नवरात्रौ पठे द्विद्वा - नेकोत्तर विधानतः
मल्लिकाजाति पुष्पैश्च - खर्जूर कदली फलैः ।।
द्राक्षा फलेक्षु खडैर्वा - होमं कुर्याद्विचक्षणः
बहुशो सिद्धि माप्नोति - फलमाप्नो त्य संशयः

एवंकृत पुरश्चर्यो - कुबेर सदृशोभवेत्
तर्पणे तर्पयामीति - स्वाहांतंच हुनेद्बुधः
जयद्वंद्व समायुक्तं - होमांतेच तथोच्चरेत्

इति श्री पराशर संहितायां पराशर मैत्रेयसंवादे
कवचस्तोत्रयंत्र महिमादि वर्णनं नाम अष्टसप्ततितमः पटः

* 卐 ॐ *

# श्री पराशर संहिता

## *एकोनाशीतितमः पटलः*

–: हनुमत्स्तोत्र रूप नाम कथनम् :–

श्री पराशरः ।

अन्यं विशेषं वक्ष्यामि - शृणुष्व मुनिपुंगव
पार्वत्यै शंकरे णोक्तं - मंत्रंतु सुमहाद्भुतम् ॥

ईश्वरः :-

पार्वति! शृणु चान्यत्र - मालामंत्र मनुत्तमम्
हनुम त्संहितायांच - मंत्रराज मिदं शुभम्
प्रतापहनुम न्माला मनुः स्पष्टपराक्रमः ॥
यो जपेच्च इमं मन्त्रं भक्त्या शुद्धेंद्रिय श्शुचिः
तस्यानिलात्मजो नित्यं - पुत्रव द्दृश्यते ध्रुवम्
मातृकाबिंदुसहिता - अनुलोम विलोमिका
वर्गाष्टक सुसंयुक्ता - अष्टोतर शताख्यका ॥
अक्षमाला जपविधौ - मन्त्राणां क्षिप्रसिद्धिदा
कवचं मूलमन्त्रच - संस्तवं मङ्गलात्मकम् ॥

यंत्र मेत त्समायुक्तं - त्रिलोकानपि साधयेत्
नातः परतरं किंचित् - मन्त्रसिद्धिषु शस्यते ॥
रोगोपशमनं शत्रु - क्षयकरं वादविजयम्
अनेन मंत्रराजेन - शीघ्रं मर्त्यो विजेयते ॥
विष्णुभक्त स्तु यो मर्त्यो - जपेन्मंत्र मनुत्तमम्
मोक्षविज्ञानसिद्धिस्तु - तस्य हृत्तले स्थिता ॥
बहुनात्र कि मुक्तेन - श्रुणुष्वैक मनुत्तमम्
सर्वसौभाग्यद भद्र - भक्तानां श्रुणु पार्वति ॥

पार्वत्युवाच :-

अज्ञानहारि देवेश - चन्द्रशेखर! शंकर!
स्तोत्ररूपाणि नामानि - हर! मे ब्रूहि विस्तरात्

ईश्वरः :-

श्रणु हैमवती! दुर्गे! - जगन्मात मम प्रिये!
आञ्जनेयाय वीराय - शिवाय विपुलौजसे
रम्य देहाय घोराय - मर्कटाय महात्मने ॥
रामदूताय दैत्यारि - वर्धनाय नमो नमः
वायुपुत्राय ज्वालाय - नमः कालाग्नि रुद्राय ॥
वालिने च नमस्तुभ्यं - कुमार ब्रह्मवारिणे
चल त्कुंडल गंडाय - दण्डितायाऽशिवाय च ॥
पुंडरीक निभेक्षाय - रामभक्ताय ते नमः
अरूपाय सुरूपाय - अणुरूपाय ते नमः ॥
विरूपाय सरूपाय - कामरूपाय ते नमः
महद्रूपाय शक्तये - नक्तंचरहराय च ॥
भुक्ति मुक्ति प्रदा याशु - मुक्तदोषाय ते नमः
वज्ररूपाय देवाय - वालास्त्राय तु ते नमः ॥

वज्रदंष्ट्राय रौद्राय - नमो रुद्रसुताय च
ब्रह्मतेजाय तेजाय - भविष्य द्ब्रह्मणे नमः ॥
नमो दोर्दंड चंडाय - ब्रह्मास्त्र स्थंभनाय च
सीतादुःख विनाशाय - सुग्रीवसचिवाय च ॥
पञ्चवक्त्राय आक्रांत - लोकालोकाय ते नमः
नम स्त्रिमूर्तिरूपाय - नमोऽब्धिलंघनाय च ॥
रामपादांबुज क्रीडा - सक्त मानसवृत्तये
स्वर्णवर्णाय पूर्णाय - पूर्णचंद्र निभाय च ॥
अज्ञानार्णव नावाय - आपदुद्धारकाय च
कवलीकृतमित्राय - कल्याण गुणशालिने ॥
भक्त्याऽनुरक्तचित्ताय - भवरोग हराय च
भोग भाग्य प्रदायाथ - रामदासाय ते नमः ॥
सुदूरीकृत दौष्टयाय - त्रैलोक्यगीत कीर्तये
नमः कृपासेवधये - चातुरीनिधये नमः ॥
पार्थध्वजनिवासाय - प्रार्थिताखिललोकिने
भक्त्योद्यान वसताय - शत्रुदाव दहाय च ॥
अक्षराय अनताय - अच्युतायाऽरिहारिणे
दशकंठ महादर्प - दलनाय नमो नमः ॥
मुद्रापहारिणे तुभ्यं - रामाज्ञकारिणे नमः
लंकापुरी विदाहाय -लंकिणीभजनाय च ॥
लंकालंकार सहर्त्रे - श्रीमहाकपये नमः
चर्मकौपीन वासाय - लस न्मौंजीवराय च ॥
रामपादाब्ज भृंगाय - पिंगाक्षाय तु ते नमः
लस द्यज्ञोपवीताय - कुण्डलालंकृताय च ॥
तुलसीदल दामाय - तुंगोतुंगभुजाय च
नखायुधाय धीराय - नव्यतेजाय ते नमः ॥

मंदारसुम दामाय - नम स्सुन्दरमूर्तये
विष्णुभक्ताय श्रेष्ठाय - ब्रह्मज्ञानिनि योगिने ।।
त्यागिने रागिणे तुभ्यं - रम्यदेहाय ते नमः
अंगदाय नमस्तुभ्यं - संगराहित हारिणे ।।
दिव्यमंगल देहाय - मंगलाकारिणे नमः
शत्रुमांगल्य संहर्त्रे - सुग्रीवाय नमो नमः
नमः प्लवगरूपाय - श्रीरामप्रियते नमः ।।
इत्यष्टोत्तर नामानि - यः पठे द्भक्तिभावितः
न पुमान् श्रिय माप्नोति - पुरुषार्थं चतुर्विधम् ।।
दीव्य त्कुण्डल कर्णमंडित लस द्गंडं हरिं वायुजम्
चंडांशु प्रतिभासमान रुचिर शत्रुप्रहारं सदा
नानारत्न विभूषितोज्वल महा मुक्तासरै र्भूषितम्
ध्यायेत् श्रीरघुराम दूत मनिशं शांत हनूमत्प्रभुम् ।।
दिव्य यज्ञोपवीताढ्य - रत्न कुण्डल मंडितम्
लस न्मौंजीयुतं देव - हेम कौपीन धारिणम् ।।
अञ्जनातनयधीरं - वायुपुत्रं समुज्वलम्
रामदूतं च रुद्रांश - केसरी प्रियनंदनम् ।।
अक्षघ्नामिततेजाढ्यं - यक्ष राक्षस संहरम्
दक्ष मिंदीवराक्ष च - रामदूत नमाम्यहम् ।।
वालाग्रेण निबद्ध राक्षसचमूं वाक्येन रामप्रभुम
भक्ता नक्षय भोग भाग्य पुरुषार्थंत्राप काशीपदैः
ध्यायतं तव दासदास मनिशं मां रक्षरक्षेति च ।।
कश्चि द्रामस्य भृत्यः कपिकुल प्रवरः कश्चि दाढ्यश्च
कश्चि त्पुत्रश्च दूतः जलरुहनयनः कश्चि दापत्सु मंत्री
एव नित्य सुसत्ये सकलविचरतः सत्यवादी सुवादी
वाली माली सुपाली परमभयकरो वानरः पातु न स्सः

इति स्तुत्वा हनूमंतं - पूजां कुर्या त्प्रयत्नतः
स एव भजते काम्यान् - नात्र कार्या विचारणा ॥

इति श्री पराशर संहितायां पराशर मैत्रेयसंवादे
हनुमत्स्तोत्ररूप कथनं नाम एकोनाशीतिः पटलः

* 卐 ॐ *

# श्री पराशर संहिता

## अशीतितमः पटलः

–: संतान हनुमन्मंत्र प्रभावास्त्र प्रयोग कथनम् :–

श्री पराशरः ।

श्लो ॥ अन्यं विशेषं वक्ष्यामि - लोकाना मुपकारकम्
संतान हनुमन्मंत्रं - शृणुत्व मुनिपुंगव
यस्य स्मरण मात्रेण - संतान प्राप्नुया द्बहु ॥

सारा त्सारमतं मंत्रं - मङ्गलानांच मङ्गलम्
मंत्रे णानेन सहसा - बहुत्र सिद्धि माप्नुयु ॥

मंत्रोद्धारं प्रवक्ष्यामि - सर्वमंत्र विशारद ।
आदौ प्रणव मुच्चार्य - श्रीबीज तदनंतरम्
मायाबीज तथोच्चार्य - हनुमन्पद मुच्चरेत् ॥

ममतनय पदं पश्चा - द्देहि देहीति संवदेत्
वह्निजायां समुच्चार्य - विंशद्वर्णो मनु स्मृतः ॥
सर्वसौभाग्य जनकं - मन्त्राणा मुत्तमोत्तमम् ॥

गद्य :- अस्य श्री संतानहनुम न्मंत्रस्या ब्रह्मा ऋषिः। गायत्रं श्री संतान हनुमान् देवता। ओं बीजं। स्वाहा शक्ति कीलकं। मम सतान हनुमत्प्रसाद सिध्यर्थे जपे विनि मूलमन्त्रेण न्यासं कुर्यात् ॥

ध्यानम् :-

अंजनासुत देवेश ! केसरी प्रियनन्दन !
देहि मे तनयं शीघ्रं - सर्वभाग्यनिधि प्रभो ॥
प्रालेय द्युति बिंब कोटि रुचिर प्रस्पर्धि देहप्रभम्
भास्व द्रत्नकिरीट कुंडल मणि व्याकीर्ण गंडस्थलम्
वामे व्याधिभि रौषध निगलभिन्नं तत्करे दक्षिणे
बिभ्राण हनुमन्त मुज्ज्वल तटित्कोटिप्रभं संश्रये ॥
पुरश्चर्याक्रमं वक्ष्ये - पञ्चलक्षं द्विजोत्तम
नारिकेलोदकेनाऽपि - गोक्षीरेण विशेषतः
गुडोदकेन योगींद्र दशांशं तर्पये द्बुधः ॥
त द्दशांश हुने द्विद्वान् - सदा जपपरायणः ॥
खर्जूरफल संयुक्तं - इक्षुखंड मधुत्रयम्
पुत्रजीव्याख्य बीजानि - घृत शर्कर संयुतम्
परमान्नं च विप्रेंद्र - होमं कुर्या द्विचक्षणः ॥
ब्राह्मणा न्भोजये त्पश्चात् - तद्दशांशं क्रमेण वै ॥
पुत्रजीव्यक्षमालाभिः - जपं कुर्या च्च बुद्धिमान्
एव यः कुरुते योगी - संतानं प्राप्नुया द्बहु ॥
अन्यं विशेषं वक्ष्यामि - शृणु मैत्रेय तत्वत:
अस्त्रसंज्ञां प्रवक्ष्यामि - लोकाना मुपकारकम्
यस्य विज्ञानमात्रेण - सर्वसिद्धि र्भवे न्नृणाम् ॥
भूत प्रेत पिशाचादि - ग्रहपीडा निवृत्तये
अस्त्रप्रयोगं कुर्वीत - प्रयोगज्ञान तत्परः ॥

न देयं भक्तिरहिते - न देयं क्रूरकर्मणि
गुरुभक्ति विहीनाय - न देय पापकमणि
अनाचाराय पापाय - न देयं अस्त्र मुत्तमम् ।।
अस्त्रोद्धारं प्रवक्ष्यामि - पुरश्चर्याविधिं तथा
प्रयोगविधि माचक्षे - सांतप च्छृणु योगिराट् ।।
तारांऽकुशं महामाया - शक्ति वाराह् मेव च
पञ्चमी बीजयुग्मं च वायु बीजद्वय तथा ।।
मध्ये साध्यं च संयोज्य - वायुबीजद्वयं लिखेत्
वाराहबीज युग्मं च - शक्ति वाराह् मेव च ।।
माया पाशं तथा तारं - मंत्र मेतं समुद्धरेत्
षोडशाक्षराख्यंरिपु – उग्रास्त्रं शीघ्रसिद्धिदम् ।।
ब्रह्मा ऋषि श्च छन्दोऽस्य – गायत्री समुदाहृतम्
देवता अञ्जनापुत्रो – शतृमारण तत्परः ।।
य बीज ग्लौं च शक्ति स्स्या - ध्धुंकार कीलकं तथा
विना योग चोग्रकर्म - कलौ चैव मूनीश्वर
ध्याना देव कलौ मर्त्यो - सर्वसिद्धि प्रयच्छति ।।

ध्यानम् :

अत्युग्रं ऊर्ध्वकेशं अरिकुल भयदं खाद दंष्ट्राधरोष्ठम्
उद्य द्बालार्कवर्णं रवि शशि नयनं कोटिसूर्य प्रकाशम्
मौंजी कौपीन युक्तं घनकरणिधरं पाणिना धारयतम्
ध्याये दुग्रास्त्ररूप उग्रतर मनघं चांजनेयं कपीशम् ।।
पुरश्चर्या मकृत्वा तु - कार्यदाहा च्च पातकी
प्रयोगा न्नाचरे त्सोऽपि - उन्मादी जायते ध्रुवम्
तस्मा त्सर्वप्रयत्नेन - पुरश्चर्या समाचरेत् ।।
पुरश्चरण कर्मेषु - असमर्थो भवे द्यदि
ग्रहणाख्य पुरश्चर्या - वक्ष्येऽहं मुनिपुंगव ।।

ग्रहणे सूर्यसोमस्य - पूर्वाह्ने समुपोषितः
नद्यां समुद्रगामिन्यां - नाभिमात्रजले स्थितः ॥
स्पर्शकालादितः जप्यं - मोक्षकालावधि स्तथा
दशांशं तर्पये त्तस्य - तद्दशांशं हुने द्घृतैः ॥
शतं वार्धशतं चैव - ब्राह्मणा न्भोजये न्मुने
तोषये च्च गुरुं चात्म - वित्तशाठ्यं न कारयेत्
मंत्रसिद्धि मवाप्नोति - नात्र कार्या विचारणा ॥
एवं सिद्धिमनु मंत्री - प्रयोगा नाचरे त्ततः
प्रयोगानंतरं चैव - भोजये द्ब्राह्मणान् ततः
अथवान्यप्रकारेण - पुरश्चरण मिष्यते
ग्रहणादिषु मोक्षांतं - जपे न्मंत्रं समाहितः ॥
अनंतरं तद्दशांशं - क्रमा द्धोमादिकं चरेत्
ततश्च मंत्रसिद्धिस्स्यात् - देवता च प्रसीदति ॥
अथवा देवता रूप - गुरुं भक्त्या प्रपूजयेत्
पुरश्चरण हीनोऽपि - मंत्रसिद्धि र्न संशयः ॥
एवं साधित मन्त्रं तु - काम्यकर्माणि साधयेत्
गुरुविश्वास हीनाय - रहस्यं न प्रकाशयेत्
तस्मा त्सर्वप्रयत्नेन - देयं कृत्वा परीक्षणम् ॥

श्री पराशरः :–

दिग्बंधनं प्रवक्ष्यामि - उग्रास्तस्य मुनीश्वर
ग्रहपीडा निवृत्यर्थं - सावधानमना श्रृणु ॥
इंद्रो देवता पूर्वे - दिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ॥
अग्नि र्देवता आग्नेयदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ॥

निॠति देवता नैॠतिदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
यमो देवता दक्षिणदिग्भागे नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
वरुणो देवता पश्चिमदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
वायु देवता वायुव्य दिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
कुबेरो देवता उत्तरदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
रुद्रो देवता ईशान्यदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
विष्णुर्देवता उर्ध्वदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
कूर्मो देवता पातालदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
भैरवो देवता अंतरिक्षदिग्भागे बध्नामि नम
श्री हनुमते स्वाहा सहस्रार हुं फट ।।
ब्रह्मो देवता सर्वदिग्भागे बध्नामि नमः
श्री हनुमते स्वाहा सहस्रार हुं फट् ।।
षडक्षरो वा अस्त्र च - शक्त्यास्त्रंत्वष्ट वर्णकम्
पाशुपतास्त्रं पञ्चार्णं - व्योमोऽस्त्रं च शतार्णकम्।।
अघोरास्त्रं च पञ्चाश - दांजनेयं च षोडश
सर्वास्त्रेषु षडस्त्राणि - श्रेष्ठानि सुमहांति च ।।
तत्रापि सुमहाश्रेष्ठ - मांजनेयास्त्र मुच्यते ।।

वषं इवश्ये फ टुच्चाटे - हुं द्वेषे खे च मारणे
ठ स्तंभे वौष डाकर्षे - इत्येवं मन्त्रपल्लवाः ॥
आदौ दिग्बधनं कुर्यात् - पश्चा निवेशकर्मणि
पिशा चोच्चाटन पश्चा त्प्रयोगनिपुणेन तु ॥
इत्युक्ता शंभुना पूर्वं क्रियते मंत्रवेदिभिः ॥
क्लीं वश्ये मायाकर्षेतु - य मुच्चाटे तथैव च
ह्लीं स्तम्भे च र विद्वेषे - मारणे व तथैव च ॥
वं शांते मोहने लं च - इत्येते आदिबीजकाः ॥
अन्यं विशेप वक्ष्यामि - मैत्रेय मुनिसत्तम!
सजपे ध्वनन्यमन्त्रं - प्रत्यहं शतसंख्यया ॥
सहस्र संख्यां गायत्रीं - प्रथमं प्रदपेद्बुधः
सहस्र प्रजपे दन्ये - मन्त्रान्तर मथ द्विज ॥
अयुत प्रजपे द्धीमान् - गायत्रीं वेदमातरम्
एव दशगुण धिक्य - जपाच्चे द्वेदमातृकाम्
मन्त्रातरस्य जप्तस्य - सिद्धि दद्या द्दृढंप्सिताम् ॥
यदि नैव कृता देवी - गायत्री पूर्वसख्यया
मन्त्रातर चिरं जप्तं - क्षणे नैव भविष्यति ॥
तस्मा त्सर्वप्रयत्नेन - प्रत्यह मुनिसत्तम!
सहस्र वा शत वापि - अष्टाविशति मेव वा
गायत्रीं प्रजपे द्धीमान् - न चातो न्यूनतो भवत् ॥
न गायत्र्याः परो मन्त्रो - न मातुः परदैवतम्
न विवेका त्परो बंधुः - इति वेदविदो विदुः ॥
गायत्रीं बहुधा जप्त्वा - सिद्धि प्राप्नोति जापकः ॥
सहस्रपरमां देवीं - शतमध्यां दशां परां
त्रिसंध्यं च जपे न्नित्य - गायत्रीं वेदमातरम् ॥

गायत्रीं स्वल्प कृत्वा तु - तन्मंत्रं भक्षये दबुधः ॥ ६४
मन्त्रान्तरं प्रवक्ष्यामि - शृणुष्व मुनिपुंगव!
त्रयोविंश त्यक्षरोऽयं - मन्त्राणा मुत्तमोत्तमम् ॥ ६५

-

अस्य श्री हनुमन्मंत्रराज महामन्त्रस्य अगस्त्यभगवान् ऋषिः गायत्री छंदः। श्री हनुमा न्देवता। ओं बीजं। स्वाहा शक्तिः। नमः ओं-अंगुष्ठाभ्यां नमः-नमो। भगवते तर्जनीभ्यां नमः। आञ्जनेयाय-मध्यमाभ्यां नमः। महाबलाय-अनामिकाभ्यां नमः। हनुमते - कनिष्ठिकाभ्यां नमः। स्वाहा - करतल करपृष्ठाभ्यां नमः (एवं हृदयादिन्यासः)। ६६

म् :

वंदे बालदिवाकर द्युति निभं देवारि दर्पापहम्
देवेंद्र प्रमुखामरार्चित पदं सीतातिशोकापहम्
मंजीररत्न विचित्रकुण्डल लस त्कौपीन कृष्णाजिनम्
वज्रप्राय महाबल कपिवरं श्रीरामसेवारतम् ॥ ६७
आदौ प्रणव मुच्चार्य - नमो भगवते पदम्
आञ्जनेयाय शब्दं च - महाबल पदं ततः ॥ ६८
यकार मुच्चरे द्धीमान् - पश्चाद्धनुमते पदम्
वह्निजायां समुच्चार्य - मन्त्रराज इति स्मृतः ॥ ६९
त्रयोविंश त्यक्षराढ्यो - मंत्रोऽय मिति कथ्यते
हनुम न्मंत्रजालेषु - जपतां शीघ्रसिद्धिदः ॥ ७०
पुरश्चर्या क्रमं वक्ष्ये - लक्षत्रय मतंद्रितम्
तर्पण तद्दशांश तु - नियमेन समाचरेत् ॥ ७१
त द्दशांश हुने द्विद्वान् - पायस त्रिमधुप्लुतम्
पञ्चविंशति संख्याकान् - ब्राह्मणान् भोजये त्ततः ॥ ७२

गुरुपूजा विशेषेण - कर्तव्या मंत्रवेदिभिः
एवं यः कुरुते योगी - मन्त्रसिद्धिर्भवे न्नृणाम् ॥

गद्य :- मध्य मानामिकांगुष्ठे हृदयाय नमो न्यसेत् । अथो
ष्टाग्रे शिरसे स्वाहा । अगुंष्ठ मध्य मानामिकाभिः f
वषट् । करद्वयांगुलिभिः कण्ठादि नाभि पर्यंतं कव
तर्जनी मध्य मानामिका नेत्रत्रयाय वौषट् । करद्व
मध्यमाध्वनिना दिक्षु अस्त्रायफट् - इति हृदयन्यासः ।

चतुर्वर्णैयस्तु हृदयं - चतुर्भि शिशर उच्यते
पञ्चभिश्च शिखायां तु - त्रिभिः कवच मेत्र च
नेत्रत्रयं चतुर्भि श्च - अस्त्रं शेषांगकं विदुः ॥
इत्थ गायत्री मंत्रस्य - अङ्गन्यासादिकं विदुः
दश प्रणवयुक्ता श्च - प्राणायामा श्चतुर्दश
मुच्यते ब्रह्महत्यायाः - किं पुन श्शेषपातकैः ॥

इति श्री पराशर सहितायां पराशर मैत्रेयसंवादे
संतान हनुमन्मन्त्र प्रभाव अस्त्रप्रयोग कथनं नाम अशीतितमः पट

* 卐 ॐ *

# श्री पराशर संहिता

## *एकाशीतितमः पटलः*

### -: अष्टोत्तर शतनाम कथनम् :-

श्री पराशरः ।

स्तोत्रांतरं प्रवक्ष्यामि - हनुम त्प्रतिपादकम्
शृणु मैत्रेय ! विप्रेंद्र - ह्यष्टोत्तर शताधिकम् ॥

अगस्त्येन पुरा प्रोक्तं सुतीक्ष्णाय महात्मने
सर्वपाप क्षयकरं - सदा विजयवर्धनम् ॥

सुतीक्ष्ण उवाच :–

भगवन्! केन मंत्रेण - स्तुत्वा तं भुवि मानवः
अयत्नेनैव लभते - सहसा सर्वसंपदः ॥
भूत प्रेत पिशाचादि - पूतना ब्रह्मरक्षसाः
कूष्मांड किन्नराधीश - रक्षो यक्षो खगादिना ॥
निधनं चैव दैत्यानां - दानवानां विशेषतः
अपस्मार ग्रहाणां च - स्त्रीग्रहाणां तथैव च ॥
महामृत्यु ग्रहाणां च - नीच चोर ग्रहात्मनां
अन्येषां चाति घोराणां - सर्पाणां क्रूरकर्मणाम् ॥
वात पित्त कफादीनां ज्वराणा मतिरोगिणाम
शिरो नेत्र मुखा स्यांघ्रि - गुद घ्राणोदरी भवाम् ॥
तथैव राजयक्ष्माणां - शांतिः केन प्रदृश्यते
चोरादि राजशस्त्रादि - विष दुस्स्वप्न भीतिषु ॥
सिंह व्याघ्र वराहादि - ष्वन्या ष्वापत्सु भीतिषु
किं जप्तव्यं महाभाग - ब्रूहि शिष्यस्य मे मुने ॥

अगस्त्य उवाच :–

सुहृदो ममभक्तस्य - तव रक्षाकरं वरम्
प्रवक्ष्यामि शृणुष्वैकं - सुतीक्ष्ण सुसमाहितः ॥
उपेंद्रेण पुरेंद्राय - प्रोक्तं नारायणात्मना
त्रैलोक्यैश्वर्यं सिध्यर्थं - अभावायचविद्विषाम् ॥
सभाया नारदादीनां - ऋषीणां पुण्यकर्मणां
उपविश्यमया तत्र - श्रुतं तस्य प्रसादतः ॥

अष्टोत्तरशतं नाम्ना - मतिगुह्यं हनूमतः
नोक्तपूर्वं मिदं ब्रह्मन् - रहस्यं यस्यकस्यचित् ॥                    १

अस्य श्री हनुमदष्टोत्तरशत दिव्यनामस्तोत्र मन्त्रस्य अगस्त्यो भगवान् ऋषिः । अनुष्टुप् छंदः । श्री हनुमा देवता । मारुतात्मज इति बीजं । अञ्जना सूनुरि शक्तिः । बायु पुत्रेति कीलकम् । मम श्री हनुमत्प्रसा सिध्यर्थे जपे विनियोगः ॥

ओं नमो भगवते आंजनेयाय - अंगुष्ठाभ्यांनमः
ओं नमो भगवते वायुपुत्राय - तर्जनीभ्यां नमः
ओं नमो भगवते केसरि प्रियनंदनाय - मध्यमाभ्यां नमः
ओं नमो भगवते रामदूताय - अनामिकाभ्यां नमः
ओं नमो भगवते लक्ष्मणप्राणदात्रे - कनिष्ठिकाभ्यां नमः
ओं नमो भगवते श्री हनुमते - करतलकरपृष्टाभ्यां नमः
ओं नमो भगवते आञ्जनेयाय - हृदयाय नमः
ओं नमो भगवते वायुपुत्राय - शिरसे स्वाहा
ओं नमो भगवते केसरि प्रियनंदनाय - शिखायै वषट्
ओं नमो भगवते रामदूताय - कवचाय हुं
ओं नमो भगवते लक्ष्मणप्राणदात्रे - नेत्रत्रयाय वौषट्
ओं नमो भगवते श्री हनुमते - अस्त्राय फट्
भूर्भुव स्सुवरो मिति दिग्बन्धः ॥                    १

नम् :—

पंपातट वनोद्देशे - परमर्षि निषेविते
परित स्सिद्ध गधर्व - किन्नरोरग सेविते ॥                    १
निर्वैर मृगसिंहादि - नानासत्त्व निषेविते
मधुरे मधुरालापे - मनोज्ञतल कंदरे ॥                    १

मतंगपर्वत प्रांत - मानसाति मनोहरे
महासिंह गुहागेहे - उपराजित पश्चिमे ।।
अतींद्रिय मनोभारैः - अतिमन्मथ काननैः
शमादि गुणसंपन्नैः - अतीत षडरातिभिः ।।
निखिलागम तत्वज्ञैः - मुनिभि र्मुदितात्मभिः
उपास्य मानव भ्राजन् - मणिपीठ उपस्थितम् ।।
नल नील मुखै श्चापि - वानरेंद्रै रुपासितम्
समुदंचित वालाग्रं - समग्र मणिभूषणम् ।।
शमंतक महोरस्क - समाहित भुजद्वयं
परार्थ्य पद्मरागादि - स्फुर न्मकरकुंडलम् ।।
वज्रपातांकित तनुं - वज्रपिंगाक्ष भीषणम्
स्वर्णाब्ज केसरि प्रख्य - शिरोरुह विराजितम् ।।
नवरत्नांचित स्वर्ण - विचित्र वनमालया
आसीन पादपाथोज - मापन्नार्ति निवारणम् ।।
करुणा वरुणावास - मरुणारुण मन्डलम्
किरणारुणितोपांत - चरणा नवहारिणम् ।।
कारणं सुरकार्याणा - मसुराणां निवारणम्
भूषणं हि नगेंद्रस्य - मानसाचल पारगम ।।
पुराणं प्रणताशानां - चरणा योधन प्रियम्
स्मरणापहृताघौधं - भरणावहितं सताम् ।।
शरणागत संत्राण - कारणंक व्रतक्षमम्
क्षणा दासुर राजेंद्र - तनय प्राण हारिणम् ।।
पवमानसुत वीर - परीत पनसादिभिः
इत्थ ध्याय न्मम न्नेव - चेतसा साधकोत्तमः
सर्वा न्कामा नवाप्नोति - नात्र कार्या विचारणा ।

ओं नमः प्लवगेन्द्राय - वायुपुत्राय वालिने
वालाग्नि दग्ध लङ्काय - बालार्क ज्योतिषे नमः
आञ्जनेयाय महते - प्रभंजन सुताय ते
प्रणतार्ति हृते तुभ्यं - प्रमाणाद्भुत चेतसे ॥
प्राचेतस प्रणयिने - नमस्ते सुरवैरिणे
वीराय वीरवंद्याय - वीरोन्मत्ताय विद्विषाम् ॥
विशाधिकाय वेद्याय - विश्वव्यापि शरीरिणे
विष्णुभक्ताय भक्तानां - उपकर्त्रे जितात्मने ॥
वनमालाग्र बालाय - पवमानात्मने नमः
कृतमानाय कृत्येषु - वीतरागाय ते नमः ॥
वालधृतमहेंद्राय सूर्यपुत्र हितैषिणे
बलसूदन मित्राय - वरदाय नमो नमः ॥
शमादिगुण निष्ठाय - शांताय शमितारये
शत्रुघ्नाय नमस्तुभ्यं शंवरारिजिते नमः ॥
जानकी क्लेश संहर्त्रे - जनकानंददायिने
लंघितोदधये तुभ्यं - तेजसां निधये नमः ॥
नित्याय नित्यानंदाय - नैष्ठिक ब्रह्मचारिणे
ब्रह्मांडव्याप्त देहाय - भविष्य द्ब्रह्मणे नमः ॥
ब्रह्मास्त्र वारकायास्तु - सदस दब्रह्मवेदिने
नमो वेदांतविदुषे - वेदाध्ययन शालिने ॥
नखायुधाय नाथाय - नक्षत्राधिप तर्चसे
नमो नागारि सेव्याय - नम स्सुग्रीव मन्त्रिणे ॥
दशास्यदर्प हंत्रेच - छाया प्राणापहारिणे
गगनात्वरगतये - नमो गरुड रंहसे ॥
गुहानुयाय गुह्याय - गंभीरपतये नमः
शत्रुघ्नाय नमस्तुभ्यं - शरांतर विहारिणे ॥

राघव प्रियदूताय - लक्ष्मण प्राणदायिने
लंकिणी सत्त्व संहर्त्रे - चैत्यप्रासाद भंजिने ॥
भवांबुराशेः पाराय - परविक्रम हारिणे
नमो वज्रशरीराय - वज्राशनि निवारणे ॥
नमो रुद्रावताराय - रौद्राकाराय वैरिणाम्
किंकरांतक रूपाय - मंत्रिपुत्र निहंत्रिणे ॥
महाबलाय भीमाय - महतांपतये नमः
मैनाककृत मानाय - मनोवेगाय मालिने ॥
कदलीवन संस्थाय - नम स्सर्वार्थदायिने
ऐन्द्र व्याकरणज्ञाय - तत्त्वज्ञानार्थ वेदिने ॥
कारुण्य निधये तुभ्यं - कुमार ब्रह्मचारिणे
नमो गंभीर शब्दाय - सर्वग्रह निवारिणे ॥
सुभगाय सुशांताय - सुमुखाय सुवर्चसे
सुदुर्जयाय सूक्ष्माय - सुमनः प्रियबांधवे ॥
सुरारिवर्ग संहर्त्रे - हर्यृक्षाधीश्वराय ते
भूतप्रेतादि संहर्त्रे - भूतावेशकराय ते ॥
नमो भूतनिषेवाय - भूताधिपतये नमः
नमो ग्रहस्वरूपाय - ग्रहाधिपतये नमः ॥
नमो ग्रह निवाराय - उग्राय चोग्रवर्चसे
ब्रह्मतंत्रस्वतंत्राय - शंभुतन्त्र स्वतंत्रिणे ॥
हरितंत्र स्वतंत्राय - तुभ्यं हनुमते नमः
अष्टोत्तरशत संख्या - हनूम न्नाम मूर्तयः ॥
पुरतः परतो व्यापी - मम पातु महाबलः
शांति रस्तु शिवं चास्तु - सत्या स्संतु मनोरथाः ॥

रक्षा भवतु योनौ वा विविधे वरदेहिनां
अविघ्नो दुःखहानिश्च - वांछासिद्धि श्शुभोदयाः
प्रजासिद्धि श्च सामर्थ्यं - मनोन्नति रनामयम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेयसंवादे
अष्टोत्तर शतनाम प्रकार कथनं नाम एकाशीतितमः पटलः

* 卐 ॐ *

# श्री पराशर संहिता

## *व्द्यशीतितमः पटलः*

### -: श्री हनूमज्जन्म कथनम् :-

श्री मैत्रेयः :-

श्लो॥ पराशर महायोगिन् - सर्वमन्त्र प्रवर्तक
भवत्कृपानुभावेन - कृतार्थोऽस्मि महामुने ॥
त मेव श्रोतु मिच्छामि - त्वत्तो भूयः पराशर!
अञ्जनागर्भ सम्भूतेः - कपेः केसरिणस्तथा ॥
अग्निगर्भ समुत्पत्तेः - वायुपुत्रत्व जन्मनः
पुत्रत्वस्य तथा ब्रह्मन् - पार्वती परमेशयोः
ब्रूहि किं कारणं मह्यं - हनूम ज्जन्म लक्षणम् ॥

श्री पराशरः ।

साधु पृष्टं महाप्राज्ञ! - मैत्रेय मुनिसत्तम!
सर्वोजनः कृतार्थोऽयं - हनूमज्जन्मवार्तया ॥
अत्रैवोदाहरिष्यामि - इतिहासं पुरातनम्
पुरा राथंतरे कल्पे - कश्यपो नाम वै द्विजः ॥

सर्वशास्त्रार्थ तत्वज्ञो - वेदवेदाङ्ग पारगः
कैलासगिरि मासाद्य - तपश्चक्रे सभार्यया ॥
सांबं शङ्कर मुद्दिश्य - प्रत्यहं मुनिसत्तम!
ग्रीष्मे पञ्चाग्निमध्येतु - हेमन्ते जल मध्यमे ॥
वर्षे ष्वनवकाशेषु - तपश्चक्रे सुदुष्करम्
एवं वर्षसहस्रेतु - तपश्चरति कश्यपः ॥
तदानीं सहसा ब्रह्मन् - अग्निवायूसहानुगौ
चक्रतुः परिचर्यां च - कश्यपस्य महात्मनः ॥
सुरभीणि च पुष्पाणि - मधुराणि फला न्यपि
समिधश्च कुशाश्चापि - पल्लवानि मृदू न्यपि ॥
एवं प्रतिदिनं तस्मै - काश्यपाय महात्मने
समीक्ष्य समयं सम्य - ग्ददतुः पावकानिलौ ॥
एवं बहु तिथौ काले - सन्तुष्टः परमेश्वरः
नन्दिकेश्वर मारूढः - पञ्चवक्त्र स्त्रिलोचनः ॥
त्रिशूल डमरु भ्राजि - दशबाहु समन्वितः
प्रसन्नवदन श्चारु - कुण्डलालंकृताननः ॥
वाम पार्श्वस्थया गौर्या - विराज च्छुभ्र विग्रहः
काश्यपस्य प्रसन्नोऽभूत् - कैलासगिरि मूर्धनि ।
मुनींद्रोवाच भगवन् - प्रहसन् पार्वतीपतिः
किं तेऽभीष्टं वरं ब्रह्मन् - किमर्थं तप्यते तपः
सद्यो ददामि तेऽभीष्टं - माकुरुष्वात्र संशयः ॥

कश्यपः :-

भगवन्! मम पुत्र स्त्वया - स्त्वमि त्येष वरो मम ॥
ततो जगाद गिरिशः - सर्वभूत दयापरः
तव कश्यप पुत्रस्त्वां - हनूम न्नामवा नहम् ॥

शम्भु नैवं वरे दत्ते - काश्यपस्य द्विजन्मनः
अपृच्छतां तत श्शम्भुं - वह्निवायू स्वकन्दरम् ॥
आवयो रपि पुत्रत्वं - भज शम्भो! निजाज्ञया
तयो रेवं प्रतिज्ञाय - शम्भु रन्तर्दधौ क्षणात् ॥
ततः केसरि नामाभूत् - काश्यपो वानरेश्वरः
सौवर्णानां गिरीशां च - त्रिचित्र मणिशालिनाम्.
षोडशानां सहस्राणां - केसरी नायकोऽजनि ॥
ततः कश्यपभार्यापि - साध्या नाम्ना सुमध्यमा ॥
पतिभक्तियुता साध्वी - गौतमस्य महात्मनः
अहल्यायां सुता जाता - ह्यंजना नामधारिणी ॥
साधुलक्षण सम्पन्ना - त्वंजना कञ्जलोचना
भार्या केसरिणो धर्म्या - जाता सर्वेश्वराज्ञया ॥
ततोञ्जना केसरिणोः - पुत्रत्वं प्राप शंकरः
कथांतरं प्रवक्ष्यामि - मैत्रेय! मुनिसत्तम!
आसी दृक्षरजो नाम - वानरः प्लवतां वरः ॥
कदाचिन्मेरु मासाद्य - कुण्डगन्धर्व नामके ॥
मेरो र्दक्षिणदिग्भागे - स्नातो नद्यां तु वानरः
नदीस्नान प्रभावेन - पुरुषः स्त्रीत्वमागतः ॥
य स्स्नाति पुरुषस्तत्र - स शीघ्रं स्त्रीत्वमाप्नुयात्
लभेत पुरुषत्व स्त्री - तत्रनास्त्यन्तर महत् ॥
सुन्दराकार सम्पन्ना - पूर्णेन्दु सदृशानना
देवता प्रतिमा साऽभूत् - सर्वालंकार शोभिता ॥
दृष्ट्वा तां वनिता मिन्द्रः - मन्मथाविष्ट मानसः
अकार्य मविचार्यैव - तया रन्तु मनोदधे ॥
गाढानुराग माहात्म्यात् - रेतो वाले स निक्षिपत्
तस्माद्वीर्या त्समुत्पन्नो - वालिनाम्ना तु वानरः ॥

तथैव तां स्त्रियं दृष्ट्वा सूर्यः परमभास्वरः
तत्सौन्दर्य प्रभावेन - स जातो मदनातुर ॥
ततः स्खलित वीर्यत्वात् - वीर्यं ग्रीवे व्यनिसृजत्
तत स्सुग्रीवनामाभूत् - कश्चिद्वानर पुङ्गवः ॥
हनूमदाप्त सम्बन्धात् - सुग्रीवो मातुल स्मृतः ॥
इति कथित मिदं हनूम च्चरित्रं सकल समृद्धिकरं
परं जनानां यदि दुरित क्षयकरोऽपि जनः
पठे च्चेदपि श्रुणुया दथ मुच्यतेऽखिल पातकैः ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री हनुमज्जन्मकथन नाम द्व्यशीतितमः पटलः

# श्री पराशर संहिता

## त्र्यशीतितमः पटलः

### -: पञ्चरत्न प्रभावकथनम् :-

ी पराशरः :-

ो॥ अन्यद्रहस्यं वक्ष्यामि - मैत्रेय मुनिपुङ्गव
सर्वलोक हितार्थाय - गुह्याद्गुह्यतमं महत् ॥
पञ्चरत्न मिति ख्यातं - हनूम न्मन्त्रपञ्चकम्
जपतां श्रुण्वतांचैव - सर्वसिद्धि प्रदायकम् ॥

॥ अस्यश्री पञ्चरत्ननाम प्रलयकाल झंझामारुत आपत्स
बडबानल. विजयविद्रुम वीरहनुमान् असाध्य साधन स
विद्याप्रद अघोरास्त्रनानाप्रयोगहर श्री हनुमन्मालामन्त्र
ईश्वरऋषिः । नानाछन्दांसि । अघोर वीरहनुमान् देवत
ओं बीज । अञ्जनासूनु रिति शक्तिः । स्वाहेति कीलः
मम सकल विषप्रयोगादि सर्व मन्त्र सिध्यर्थे जपे विनियोग

ओं नमो भगवते उद्दण्ड हनुमते अंगुष्ठाभ्यां नमः
ओं नमो भगवते प्रतापहनुमते तर्जनीभ्यां नमः
ओं नमो भगवते चिन्तामणि हनुमते अनामिकाभ्यां नमः
ओं नमो भगवते कालाग्निरुद्र हनुमते कनिष्ठिकाभ्यां नम
ओं नमो भगवते ब्रह्मास्त्र निवारणाय वायुपुत्र हनुमते
करतल करपृष्ठाभ्यां नम

ओं नमो भगवते उद्दण्ड हनुमते हृदयाय नमः
ओं नमो भगवते वीरहनुमते शिरसे स्वाहा
ओं नमो भगवते प्रतापहनुमते शिखायै वषट्
ओं नमो भगवते चिन्तामणि हनुमते कवचाय हुं
ओं नमो भगवते कालाग्निरुद्र हनुमते नेत्रत्रयाय वौषट्
ओं नमो भगवते ब्रह्मास्त्र निवारणाय वायुपुत्र हनुमते
अस्त्राय फट्

भूर्भुव स्सुवरोमिति दिग्बन्ध ॥

नम् :

असाध्यसाधनं कार्य - वश्य जित जगत्त्रयम्
नर वानर रूपाढ्यं - वन्दे हरिहरात्मकम् ॥
राज्य प्रदं हनूमन्तं - उदार मधुरप्रियम्
श्रुतिचिन्तामणिं काम धेनुं कल्पक माश्रये ॥
स्फटिकोत्पल संकाश - स्वर्णमाणिक्य भूषितम्
द्विभुजं सर्व सम्पन्नं - कृतांजलिपुटं शुचिम ॥
नग्नः पिंगोर्ध्वकेशी ज्वरभय हरणः काल दर्पापहारी
नृत्यद्भूतालसङ्गो गलित शशिकलो वैरिप्रेताधिवासः
पिङ्गाक्षो रक्तवर्णः त्रिनयन सुभगो तीक्ष्णदंष्ट्रा करालो
देवो मन्त्रात्मजो मे प्रहरतु दुरितं सर्वरक्ष स्स हनुमान् ॥

:-

ओं नमो भगवते दानवकुल कालाग्नि हनुमन्त यशोवितान । धवल
कृत जगत्त्रितय । वज्रदेह, वज्रकवच, वज्रतुण्ड, वज्रनख, वज्रमु
वज्रवाल, वज्ररोम, वज्रनेत्र, वज्रदन्त, वज्रशिर, वज्रपाद, म
आत्मकराय, भीकर पिङ्गाक्ष उग्र प्रलय कालरौद्र वीर भद्रावता
शरभ साल्व दौर्दण्ड, लङ्कापुरी दहन, उदधिबन्धन, दशग्रीव दा
वान्तक, सीतासमाश्वासन, ईश्वरपुत्र, वायुनन्दन, अञ्जनाग
सम्भूत, उदयभास्कर, बिम्बानल भक्ष्य, देव दानव मुनिवीर वन्द
द्वात्रिंशदायुधधर, पाशुपतास्त्र ब्रह्मास्त्र वैष्णवास्त्र नारायणास
कालशक्ति, कालदण्ड, कालपाश घोरास्त्र निवारण, पाशुपतास्त्रधर
वैष्णवास्त्र वरारूढ़, नारायणास्त्रधर, सर्वशक्तये, दिव्यशक्तिमय रम
सर्वशक्तिकर, परविद्यानिवारण, अग्निवाल, अग्निरूप, अथर्वणवे
सिद्ध, चिरकाल निराहार, वायुवेग, श्रीरामावतार परब्रह्मविश्वरू
निदर्शन, लक्ष्मण प्राणप्रतिष्ठानन्दकर, स्थल जलाग्नि मर्ममनोभेदि
सर्वशत्रुभेद, मम वैरिखादि, सञ्जीव पर्वतोत्पाटन, सुग्रीव सन्धा
कर, अस्खलित कुमार ब्रह्मचारी, दिगम्बर, गम्भीरशब्द, सर्वपा
विनाशन, सर्वज्वरच्छेदन, छिन्दि छिन्दि, भिन्दि भिन्दि, छेद
छेदय, मारय मारय, शोषय शोषय, ज्वालय ज्वालय, प्रहर
प्रहरय, प्रसर प्रसर, द्रावय द्रावय, नन नन: नाशय, नाशय, स
दुष्कृतान् विनाशय विनाशय सर्व पापं नाशय नाशय, आत्मेशा
येशाय, सर्वरक्षकर रक्ष रक्ष स्वाहा ॥

आद्य मालामनोवर्णाः - पञ्चरत्न हनूमतः
त्रयोदशोत्तरा पञ्चशतानी त्यत्रधारिताः ॥

:-

ओं नमो भगवते प्रतापहनुमते ग्रहमण्डल, भूतमण्डल, प्रेतमण्डल
पिशाचमण्डल परमण्डलाभिर्धाटय, ग्रहज्वर, माहेश्वरज्वर, ब्रह
ज्वर, वैष्णवज्वर, विषमज्वर, शीतज्वर, वातज्वर, त्र्याहिक
चातुर्थिक ज्वरान् छिन्दि छिन्दि भिन्दि भिन्दि हुं फट् स्वाहा।। १

। द्वितीय मन्त्रवर्णानां - दशोत्तर शतं मुने!
समस्त भूत संभूत - पिशाचादि विवर्तका ॥
समस्तारोग्यदं नृणां - सर्वज्वर निवारणम् ॥ ११

:-

ओं नमो भगवते चिन्तामणि हनुमते, अङ्गशूल शिरदशूल अक्षिशूल कुक्षिशूल, गुल्मशूल पित्तशूल, सर्वशूल निवारणाय दानव दैत्य कामिनी भेताल ब्रह्मरक्षस कोलाहल विनाशनाय कालपाश महा-नागकुल सर्वविष निर्विष कुरुकुरु पाताल गरुड हनूमन्त, मैरावण मदप्रजसिंह, इन्द्रादि पाश बन्ध भेदन, प्रलय मारुत कल्प, कालाग्नि हनुमन्त, शृङ्खलाबन्ध मोक्षण सर्वग्रह बल सर्वबल भेदयभेदय । सर्व कार्याणि मे साधय साधय । मयि प्रसन्न प्रसन्न । श्रीराम पार्श्वक रक्ष । सिंहभैरव स्वरूप, ओं द्रां क्षां भैं ध्यां श्रीं ह्लीं क्लीं क्रौं ह्लीं ह्लां ह्लीं ह्लू ह्लैं ह्लौं खखखखखखखखख जजजजज मारण मोहनांघृणि मठमठ मारय मारय भ्रामय भ्रामय हनहन कुरुकुरु राजराज हस्य हस्य, मथमथ सर्वदुष्टग्रहान् प्रज्वालय प्रज्वालय, दहदह मम तस्य सहाय शमय शमय अस्तोक त्रिशूल डमरु गदा चक्रासि कालपाश कपाल वृक्षाहि सूधर भयङ्कराय स्फीताय तैवर्त यावर्तय बाह्याभ्यन्तरङ्ग भूतप्रेत परमन्त्र परयत्र परतन्त्र शतसहस्र कोटिपूजा भेदनाय, सर्वविष लघनाय, अनन्तवासुकि तक्षकादि नागानां द्वादशकुल पुच्छिकानां, त्रयोदशकुल वृश्चिकानां, एकादश कुल लूतानां, हनहन । वभ्रदेह, वज्रभूषणाय हनहन । वशीकरण स्तम्भन जृम्भण आकर्षण उच्चाटन विद्वेषण मारण युद्ध सर्वायुध कर्म मम बन्धन छेदय छेदय हूं फट् स्वाहा । ओं कुमार ब्रह्मचारि पार्वतीहरजोग्र मूर्तये ग्रामवास निषेधित पूर्व शक्तये अक्षया याधोराय लललल घ्रां घ्रों हुं हुं टटटट लललल दशभुजाय अष्टशक्त्यङ्ग धराय पवनोद्भवाय, नखायुध धराय, अष्टभैरवाय, नवब्रह्माय: दशविष्णुरूपाय, एकादश रुद्रावताराय, द्वादशार्क तेजोरूपाय त्रयोदशनाम मुखाय मम सर्वसिद्धि कुरु कुरु स्वाहा ॥ १२

तृतीय मन्त्र वर्णास्तु - एकोनासीति संयुताः
चतुश्शताश्च संख्याकाः - सर्वकार्यार्थं सिद्धिदाः
चतुर्थ मन्त्र वर्णास्तु पञ्चत्रिंशोत्तरं शतं
सर्वदेव स्वरूपाश्च - सर्वत्र विजयप्रदाः ॥

मनुः :-

४. ओं नमो वीरहनुमंत स्तंभिनी मोहिनी वशीकरणं विद्वेषिणी, मारणी मुच्चाटनाय, श्रीराम सेवातत्पर, रा सभामुखबंधन, बलामुख बंधन, नारी मुख बधन, ग्राः चोर मुखबधन. मकर चौषष्टि मुखबंधन, सिंह व्याघ्र बंधन, सर्प वृश्चिक जल पाषा णाग्नि निर्गुडन, सर्व मुख महिष शृङ्ग निर्घाटन दुष्टमुख बधन बधन, श्री वीर ह पुत्र, वायुनन्दन अञ्जनासुत सर्व वध मोक्षण, सत्यस पराक्रमाय, ह्राँ ह्रीं ॐ मां घ्रीं भ्रीं यां श्रूं मं॰॰ नं॰॰ भ्र घटघट सर्वघट दुष्कुट शत्रुघट वश्यघट सर्वांजन घटान् ह्लां ह्लीं ह्लूँ स्तम्भय स्तम्भय हिमाद्रि मेरु वह वह सर्व सर्व मन्त्रार्थं सिद्धि कुरु कुरु स्वाहा ॥

श्लो ॥ अथ पञ्चमवर्णास्तु - द्वौ शतौ सप्तसप्ततिः
सर्वप्राण मुखस्तंभ - सर्वजन्तु वशीकरम् ॥
समस्तमन्त्र वर्णानां - संख्या श्रुणु महामुने!
चतुर्दशोत्तरं सार्धसहस्र परिकीर्तितम् ॥

रामेष्टं करुणापूर्णं - हनूमन्तं दयावहम्
शत्रुनाशकरं वन्दे - सर्वाभीष्ट फलप्रदम् ॥

रामप्रियं हनूम तं - आञ्जनेयं महाबलम्
राक्षसांतक मावक्ष्ये - देहि दापय मे श्रियम् ॥

रामप्रिया त्मया लब्धं - पुरुषार्थ चतुष्टयम्
तस्य सिद्धिप्रयत्नेन - हनुम च्चरणांबुजम् ॥

रामप्रियाय हरये - वेधसे वायुसूनवे
सीताशोक विनाशाय - नमः कल्पद्रुमाय च ॥
हनूमत्पञ्चरत्नानि - यः पठे न्नियतेन्द्रियः
सर्वसिद्धि मवाप्नोति - नात्र कार्याविचारणा ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
पञ्चरत्न प्रभाव कथन नाम त्र्यशीतितमः पटलः

*

# श्री पराशर संहिता

## चतुरशीतितमः पटलः

:- हनुमद्दीप विधान प्रकार कथनम् :-

श्री पराशरः :-

श्लो ॥ हनुम द्दीपिका दान - विधानं तु प्रयत्नतः
वक्ष्यामि मुनिशार्दूल - गुह्याद्गुह्यतरं महत् ॥
अथ दीपविधानं वै - प्रवक्ष्यामि हनूमतः
येन विज्ञान मात्रेण - सिद्धो भवति साधकः ॥
दीपपात्र प्रमाणंच - तैलमानं क्रमेण तु
द्रव्यस्य च प्रमाणं च - तन्तुमान मनुक्रमात् ॥
स्थानभेदं च मन्त्र च - दीपदान मनुपृथक्
पुष्पवासित तैलं तु - सर्वकामप्रदं मतम् ॥
तिलतैलं श्रियो हेतुः - कथित स्यागमं प्रति
अतसी तैल मुद्दिष्टं - वश्यकर्मणि निश्चितम् ॥

सार्षपं रोगनाशाय - सर्वव्याधि प्रणाशनम्
मारणे सरसा जातं - तथा वै भीत कोद्भवम् ॥
उच्चाटने करंजोद्धं - विद्वेषे मधुवृक्षकम्
अलभे सर्वतैलानां - तिलतैल मनुत्तमम् ॥
गोधूमश्च तिला माषा - मुदगा वै तंडुला क्रमात्
पञ्चधान्य मिदं प्रोक्तं - नित्यदीपे तु मारुतेः ॥
पञ्चधान्य समुदभूतं - पिष्टपात्रं तु शोभनम्
सर्वकामप्रद प्रोक्तं - सर्वदा दीपदापने ॥
वश्ये तण्डुलपिष्टं च - मारणे माषपिष्टकम्
उच्चाटने कृष्णतिल - पिष्टजं वै प्रकीर्तितम् ॥
साध्य स्यागमने प्रोक्तं - गोधूमोत्थं सतण्डुलम्
मोहनं त्वाढकी जातं - विद्वेषे च कुलुत्थजम् ॥
संग्रामे केवला माषा - प्रोक्ता दीपस्य पात्रके
सिद्धौ त्रिपिष्टज प्रोक्तं - व्रीहि यव गोधुमा इति ॥
एला लवङ्ग कर्पूर - मृगनाभि समुद्भवम्
कन्यकावरणे राजवश्ये - सख्ये तथैव च ॥
अलाभे सर्ववस्तूनां - पञ्चधान्यं वरं मतम्
अष्टमुष्टि भवेत्किष्कि - किष्किदष्टे तु पुष्कलम् ॥
पुष्कलानिच चत्वारि - आढकः परिकीर्तितः
पञ्च सप्त तथा मन्द - प्रमाणास्ते यथातथा ॥
सौगधिकं तु सौवीर - पांचालं चैव मानकम्
गृहनिर्माण मानं तु - इत्येवं गुरु रब्रवीत् ॥
पञ्चांगुल तु सौगंध्यं - पांचालं सप्तसंख्यया
तंतु सख्या तु सौवीरं - स्वामिहस्त प्रमाणतः ॥
नित्यदीपः प्रकर्तव्यः - ताम्रपात्रे हनूमतः
सोमवारे च तध्यानं - जलपूरं तु कारयेत् ॥

पश्चा त्प्रमाणतो ग्राह्यं - कुमारी हस्तपेषणम्
तत्पिष्टं शुद्धपात्रे तु - नदी तोयेन पिंडितम् ॥
दीपपात्रं ततः कुर्यात् - शुद्ध प्रयतमानसः
दीपपात्रे दह्यमाने - मारुतेः कवचं पठेत् ॥
मालामनूनां ये वर्णाः - साध्यनाम समन्विताः
वर्तिकायाः प्रकर्तव्याः - तन्तुन स्तत्प्रमाणजाः ॥
त्रिशांशेनैव वा ते स्युः - गुरुकार्येऽखिला मतः
कूटतुल्या स्मृता नित्ये - सामान्येषु विशेषके ॥
रुद्राः कूटगणाः प्रोक्ताः - सात्रे नियमो मतः
एकविंशति संख्याका स्तंतवो द्वाध्वनि स्मृताः ॥
रक्तसूत्रं हनुमतो - दीपदाने प्रकीर्तितम्
कृष्ण मुच्चाटने द्वेषे - मारणे सर्वकर्मसु ॥
कूटतुल्यफल ते तु - सर्वकाले शिवै र्गुणम्
नित्ये पञ्चफलं प्रोक्तं - अथवा मनसो रुचिः ॥
शेषोऽन्यत्र यः कश्चि त्प्रोच्यते मारुते मया
प्रतिमादि प्रदानेषु - ग्रहभूत ग्रहेषुच
चतुष्पथे तथा प्रोक्तं - दीपदान च षट्सु च ॥
सन्निधौ स्फाटिके लिंगे - सालग्रामस्य सन्निधौ
नाना भोग श्रियै प्रोक्तं - दीपदानं हनूमतः ॥
गणेशसन्निधौ विष्णौ - महासंकट नाशने
विषव्याधि भये घोरे हनुम त्सन्निधौ कुरु ॥
दुर्गाया सन्निधौ प्रोक्तं - संग्रामे घोरसंकटे
व्याधिभयेऽसममार्गे - दृष्टादृष्टौ तथैवच ॥
राजद्वारे बंधमुक्तौ - कारागारेऽथवा चरेत्
अश्वत्थतरुमूले च - सर्वसिद्धि प्रसिद्धये ॥

वश्ये भय विवाहे च - शस्त्र संग्राम संकटे
द्यूते वृष्टिस्तंभने च - विशेषा न्मारणे तथा ॥ ३
भूत कोत्थापने चैव - प्रतिबंधनने धृवम्
विषव्याधौ ज्वरे भूत - गृह कृत्या विमोचने ॥ ३
क्षते ग्रंथौ महारण्ये - दुर्गे व्याघ्रे च दंतिने
क्रूरसत्वेषु सर्वेषु - शश्व द्बंधविमोक्षणे ॥ ३
पथिकागमने दूरयाने राजविमोहने
आगमे निर्गमे चैव - राजद्वारे प्रकीर्तितम् ॥ ३
रुद्रैकविंश पिंडा श्च - अथ मंडलमानकम्
लघुमानं स्मृतं पञ्च - सप्त वा नव वा तथा ॥ ३५

प्रतिमा :-

क्षीरेण नवनीतेन - दध्या वा गोमयेन वा
प्रतिमाकरणं प्रोक्तं - मारुतेः दीपदापने ॥ ३६
दक्षिणाभिमुख वीरं - कृध्य त्केसरिविक्रमम्
अक्षरक्षो हर पादं - किरीटेन विराजितम् ॥ ३७
लिखे च्च चित्रं पट्टे वा - पदे वा मारुते श्शुभम्

कारः :-

मालामत्रेण दातव्यं - दीपदानं हनूमतः ॥ ३८
नित्यं दीपः प्रदातव्यो - द्वादशाक्षर विद्यया
तत्त न्मालाख्य मत्रेण तत्तत्कार्येषु कारयेत् ॥ ३९
अथवा मुनिशार्दूल - पठे द्विद्वा नतन्द्रितः
प्रतापहनुम न्माला - मत्रं तु सपरिच्छदम् ॥ ४०
प्रतापहनुम न्माला - पठनेन भवे न्मुने!
समस्त माला मन्त्राणां - पठनं तु नसंशयः ॥ ४१
आदौ तु मन्त्रदीपे च - मन्त्रं सूर्याक्षरं वदेत्
गोमये नोपलिप्तायां - भूमौ तद्गतमानसः ॥ ४२

षटकोणं वसुपत्रं च – भूपुरेण समन्वितम्
कमलंच लिखेद्भद्रं - तत्र सम्पूज्य मारुतिम् ।।
शैवे वा वैष्णवे पीठे - मध्ये कूटादि सयुते
प्रट्कोणेषु षडङ्गानि - लिखेद्विद्वान् समाहितः ।।
अञ्जनीपुत्राय तथा – ततो वै रुद्रमूर्तये
वायुसुतायेति तथा - जानकी जीवनाय च ।।
श्रीरामदूताय ततो - ब्रह्मास्त्र वारणाय च
बीजयुक्त च पट्कोणे - नाम मन्त्रं तथा लिखेत् ।।
वसुपत्रेषु बीजानि - नामानि च यथाक्रमम्
सुग्रीवा याङ्गदा याथ - सुपर्णाय ततः परम् ।।
नलाय चाथ नीलाय - तथा जाम्बवते पदम्
प्रहस्ताय सुवेषाय - दलमध्येषु लेखयेत् ।।
इत्थं मारुति मभ्यर्च्य - पश्चाद्दीपस्य दापनम् ।।
दीप प्रज्वाल्य यत्नेन - दीपे मारुति चिंतनम्
पञ्चोपचारै स्सपूज्य - देशकालानुकीर्तनम् ।।
कुशोदक समादाय - दीपमन्त्रं समुच्चरेत्
उत्तराभिमुखो भूत्वा - प्रयत स्साधकोत्तमः ।।
तं मन्त्रं कूटकं जप्त्वा - जलं भूमौ विनिक्षिपेत्
ततः करपुटं बध्वा - यथा शक्ति जपे न्मनुम् ।।
अनेन दीपचर्येण - ह्यु दङ्मुख गतेन वै
तथाविधौ वा हनुम - न्यथा मे स्यु र्नसंशयः ।।
प्रत्यहं यो विधानेन - दीपदानेन मारुतेः
तस्याऽसाध्यं नैव किञ्चत् - विद्यते भुवनत्रये ।।
न देयं दुष्टहृदये - दुष्टचित्त कुबुद्धये
अविनीताय शिष्याय - पिशुनाय कदाचन ।।

कृतध्नाय न दातव्यं दतव्यं तु परीक्षिते
यत्र कुत्राभिचारेण - मृतवंशोऽभिजायते ।।
तस्मात्सर्वप्रयत्नेन - देयं कृत्वा परीक्षणम्
देवानांच यथा विष्णुः - नदीनां जाह्नवी यथा ।।
तक्षकः सर्वसर्पानां - धेनूनां कामधुग्यथा
तथा पराशरस्येयं - संहिता परिकीर्तिता ।।
विष्णुभक्ताय दान्ताय - शान्ताय कुलधर्मिणे
सुशीलाय सुशिष्याय - कृतज्ञाय प्रकाशयेत् ।।
यथा माहिष्मतीनाद स्तथा वायुसुतः स्मृतः
उभयो रन्तरं नास्ति - कृत्वा पाप मवाप्नुयात् ।।
प्रसन्नाखिल लोकार्ति - हारिणे श्री हनूमते
अकस्मा दागतोत्पात - नाशनाय नमोस्तु ते ।।
इमं दीपप्रदानान्ते - ह्यष्टोत्तरशतं जपेत् ।।

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
हनुमद्दीपदान विधि कथनं नाम चतुरशीतितमः पटलः

* 卐 ॐ *

# श्री पराशर संहिता

## पञ्चाशीतितमः पटलः

### -: श्री हनुमद्द्वादश मालामन्त्र कथनम् :-

श्री पराशरः :

श्लो।। मन्त्रान्तरं प्रवक्ष्यामि - दीपप्रकरणं बुध!
सर्वलोक हितार्थाय - श्रुणु मैत्रेय तत्वतः ।।
पञ्चार्णं द्वादशार्णं च - मालामन्त्रास्तु द्वादश
क्रमेण वक्ष्ये योगीन्द्र - सावधानमना श्रुणु ।।

नत्वा श्रीशं चिदानन्दं - शङ्करानन्द सेवितम्
लिख्यते शङ्करानन्द - दायको हनुमन्मनुः ॥
१. ओं ह्रीं स्फें ह्रूं ख्रूं ह्रौं - इति पञ्चाक्षरी ॥
। आद्यः पञ्चाक्षरो मन्त्रो - सर्वकाम फलप्रदः
सर्वशत्रु क्षयकरो - सदा विजयवर्धनः ॥ ३
२. ओं ह्रीं स्फें ख्फें ह्रौं ह्स्ख्फ्रौं ह्सौं
हनुमते नमः इति द्वादशाक्षरी ॥
। द्वितीयो मन्त्र आख्यातः - सर्वसम्पत्प्रदायकः
द्वादशाक्षर मन्त्रस्तु - सदा विजय कारणम् ॥ ५

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं स्फें ख्फें ह्सौं ह्स्ख्फ्रें नमो हनुमते ममपरस्य च क्षयकुष्ठ गण्डमाला स्फोटक क्षतज्वरैकाहिक द्व्याहिक त्र्याहिक चातुर्थिक सन्ततज्वर। सन्निपातिक ज्वर। भूतज्वर। मन्त्र ज्वर, शूल, भगन्दर, मूत्रकृच्छ्र, कपालशूल, कर्णशूल, अक्षिशूल उदरशूल, हस्तशूल, पादशूलादीन् सर्वव्याधीन् क्षणेन, छिन्दि छिन्दि भिन्दिभिन्दि नाशय नाशय। निकृन्तय निकृन्तय। छेदय छेदय। भेदय भेदय महावीरहनुमान्। हाहाहा हुं हुं। घे घे। ह्रां ह्रूं फट् स्वाहा। ६

सप्तत्युत्तर शतं वर्णाः - मन्त्रे ह्यस्मिन्प्रकीर्तिताः
अयंरोग प्रशांत्यर्थं - जप्तव्यस्सततं नृणाम् ॥ ७
भस्म वार्यौषधं सर्वं - मन्त्रयित्वा ददेत्सुधीः
सर्वरोग प्रशमनं - सर्वारोग्य प्रवर्धनम् ॥ ८
सर्वशूल हरो नित्यं - सर्वज्वर निवारणम्
सर्वं वश्यकरो नृणां - क्षय कुष्ठादि नाशनम् ॥ ९

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं स्फें ख्फें ह्सौं ह्स्ख्फ्रें ह्सौं नमो हनुमते महाबलतेजः पराक्रम ममपरस्य च। भूतप्रेत पिशाच शाकिनी डाकिनी यक्षिणी पूतनामारी महामारी कृत्य यक्ष राक्षस भैरव भेतालग्रह ब्रह्मग्रह ब्रह्मराक्षसादिकजात क्रूरबाधाः। क्षणेन हनहन भञ्जय

भञ्जय । विनाशय विनाशय । वारय वारय । बन्धय बन्धय नुदनुद। तुदतुद। धुनुधुनु। दूरस्थान समीपस्थान् भूतभविष्यद्वर्तमानान पुं स्त्री नपुंसकान् चातुर्वर्ण्यान् । क्षणेन सत्वरं हनहन, दहदह संहारय संहारय। मोहय मोहय। मर्दय मर्दय। द्वेषय द्वेषय मार्जाल मूषकवत्सद्यः प्राणं वियोजय वियोजय। विध्वंसय विध्वंसय । किलि किलि । मूकय मूकय। जारय जारय बन्धय बन्धय। जृम्भय जृम्भय। पातय पातय। मम परस्य च। पाद तलाक्रमितान् कुरुकुरु। विध्वंसय विध्वंसय । मोचय मोचय। मां रक्ष रक्ष। एनं रक्ष रक्ष। महामाहेश्वर रुद्रावतार। हाहाहा। हुं हुं हुं घे घे घे । हुंफट् स्वाहा । १०

। वर्णानां द्विशतं प्रोक्तं - षट्षट्युत्तरं मनोः
ब्रह्मराक्षस भेताल - महामारी निवारणम्
अयं चतुर्थ मन्त्रस्तु - कथितो मन्त्रवेदिभिः ।। ११

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्सौं नमो हनुमते राक्षसकुल दावानल। द्वादशार्ककोटि प्रभाप्रज्वल तनूरुह। भीमनाद। मम परस्य च। दुष्टदुर्जन महारक रक। वादिविवादि द्वेषकारक कायभञ्जक। क्रूर प्रकृतिक। प्रवृद्धकोपावेशक। हनुकामु कायपातय पातय। पादतलाक्रमितान् कुरुकुरु। सर्वप्राणि भूतान् वातकामान् सम्पादय सम्पादय। हाहाहा हुं हुं हुं। घे घे घे । हुंफट् स्वाहा ।।१२

। मन्त्र पञ्चम संज्ञोयं - चतुस्त्रि शत्शतार्णकः
दुष्टदुर्जन संहारो - वादिवैरि विनाशनः ।। १३

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्सौं नमो हनुमते त्रैलोक्याक्रमण पराक्रम श्रीरामभक्त । ममपरस्य च । सर्वशत्रून् चतुर्वर्ण सम्भवान् । पुं स्त्री नपुंसकान् । भूतभविष्यद्वर्तमानान् । नानादूरस्थ समीपस्थान् । नाना नामधेयान् । नानासङ्करजातीयान्। कलत्र पुत्र मित्र भृत्य बन्धु सुहृत्समेतान् । प्रभुशक्ति सहितान् धन धान्य सम्पत्तियुतान् । राजसेवकान् । मन्त्रिसचिव सखीनात्यन्तिकान् । क्षणेन । त्वरया एतद्दिनावधि नानोपायै मारय मारय ।

शस्त्रैश्छेदय छेदय । अग्निना ज्वालय ज्वालय । दाहय दाहय अक्षकुमारवत् पादतलाक्रमणेन शिलातले आत्रोटय आत्रोटय घातय घातय । बन्धबन्ध । भूतसर्वैस्सह भक्षय भक्षय । क्रुद्धचेतसा नखैर्विदारय विदारय । देशादस्मादुच्चाटय उच्चाटय । पिशाचब्रह्मशय भ्रंशय । भ्रामय भ्रामय । भयातुरान्सद्यः कुरुकुरु । भस्मीभूता नुद्धूलय उद्धूलय । भक्तजनवत्सल, सीताशोकापहारक । सर्वत्र मामेनञ्च रक्षरक्ष । हहह । हुं हुं हुं । घे घे घे हुंफट् स्वाहा ॥ १४

षष्ठस्य मन्त्रराजस्य - त्रिशतं विंश दुत्तर
सर्वशत्रु क्षयकर - सर्ववश्य फलप्रदम् ॥ १५

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्सौं ओं नमो हनुमते प्रकटित पराक्रमाक्रान्त । सकल दिङ्मण्डलयशोवितान । धवलीकृत जगत्त्रिय वज्रदेह । ज्वलदग्नि सूर्यकोटि समप्रभ तनूरुह । रुद्रावतार । लङ्कापुरीदहन। उदधि लङ्घन, दशग्रीवशिरः कृतान्तक, सीताश्वासन, वायुसुत, अञ्जनी गर्भसम्भूत, श्रीराम लक्ष्मणानन्दकर, कपिसैन्यप्राकार, सुग्रीव सख्यकारण, वालिनिबर्हण कारण, द्रोणपर्वतोत्पाटन, अशोकवन विदारण, अक्षकुमारकच्छेदन, वनरक्षाकर समूह विभञ्जन, ब्रह्मास्त्र ब्रह्मशक्तिग्रसन, लक्ष्मणशक्ति भेदशल्या विशल्यौषधि समानयन, बाल्योदित भानुमण्डलग्रसन, मेघनाद होमविध्वंसन, इन्द्रजिद्वधकारण, सीतारक्षक, राक्षसीसङ्घ विदारण, कुम्भकर्णादि वधपरायण, श्रीरामभक्ति तत्पर, समुद्र व्योमद्रुमलङ्घन, महासामर्थ्य, महातेज पुञ्जविराजमान, स्वामि वचन सम्पादित, अर्जुन सयुग सहाय, कुमारब्रह्मचारिन्, गम्भीर शब्दोदय, दक्षिणाशा मार्तांड, मेरुपर्वत पीठकार्चन, सकल मन्त्राग-माचार्य, मम सर्वग्रह विनाशन, सर्वज्वरोच्चाटन, सर्वविषविनाशन, सर्वापत्तिनिवारण, सर्वदुष्ट निबर्हण, सर्पव्याघ्रादिभय निवारण, सर्व शत्रुच्छेदन, मम परस्य त्रिभुवन पुंस्त्री नपुंसकात्मकं सर्वजीवजात वशय वशय । मम आज्ञाकारक सम्पादय सम्पादय । नाना नामधेया न्सर्वान्राज्ञः सपरिवारान् मम सेवकान् कुरुकुरु । सर्वशस्त्रास्त्र विषाणि

विध्वंसय विध्वंसय । ह्रां ह्रीं ह्रूं । हा हा हा । एहि हसौं ह्स्फ्रें ह्सौं स्फ्रें स्फ्रें सर्व शत्रून् हन हन । परबलानि पर सैन्यानि क्षोभय क्षोभय । मम सर्वकार्यजातं साधय साधय । सर्व दुष्ट दुर्जन मुखानि कीलय कीलय । घे घे घे । हा हा हा । हुं हुं हुं फट् स्वाहा । १६

सप्तमस्तु मनोर्वर्णा - शत पञ्च समीरिताः
अष्टोत्तर सप्ततिश्च - सर्वापद्विनिवारणे ॥ १७

ओं ऐं श्री ह्रां ह्रीं ह्रूं हसौं स्फ्रें स्फ्रें ह्सौं ह्स्फ्रें हसौं ओं नमो हनुमते मम परस्य च महाभयानि, सर्वव्याघ्र तस्कर जलाग्नि विष जङ्गम स्थावर संहजकृत्रिमोपविष, महासंग्रामारण्य, वादविवाद, शस्त्रास्त्रादिकानि संहर संहर । विनाशय विनाशय । ग्रस ग्रस । ग्रासय ग्रासय । स्तम्भय स्तम्भय । कुण्ठय कुण्ठय । तोडय तोडय । निकृन्तय निकृन्तय । भञ्जय भञ्जय । वानर ऋक्ष महावीर मामेन च रक्ष रक्ष । हाहाहा । हुं हुं घे घे घे । हूं फट् स्वाहा । १८

षट्चत्वारिंशदधिक - शतर्णोष्टम मन्त्रकः
विष तस्कर वह्न्यादि - शस्त्रादि भयवारणम्
संग्रामे जयदो नित्यं - सर्वारिष्ट निवारकः ॥ १९

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं हसौं स्फ्रें स्फ्रें ह्सौं ह्स्फ्रें हसौं नमो हनुमते पाहिपाहि एहि एहि । सर्वग्रह भूतानां । शाकिनी डाकिनीनां । विषमदुष्टानां । सर्वविषयानां । आकर्षय आकर्षय । मर्दय मर्दय । छेदय छेदय । मृत्यून्मारय मारय। प्रभूतमर्त्यान् शोषय शोषय । ज्वल ज्वल । प्रज्वल प्रज्वल । मारय मारय । संहारय संहारय । मां रक्ष रक्ष । हुं फट् स्वाहा ॥ २०

षोडशार्णोत्तर शत - वर्णोऽयं नवमो मनुः
शाकिनी डाकिनीत्यादि - दुष्टग्रह निवारकः ॥ २१

ओं ऐं ह्रौं श्रीं ह्रां ह्रीं ह्रूं ओं नमो हनुमते ग्रहमण्डल भूतमण्डल प्रेतमण्डल पिशाचमण्डल निरसनाय। भूतज्वर प्रेतज्वर पिशाचज्वर चातुर्थिकज्वर विष्णुज्वर माहेश्वरज्वरान् छिन्दि छिन्दि। भिंदि भिंदि अक्षिशूल पक्षशूल शिरोभ्यतरशूल गुल्मशूल पित्तशूल वातशूल। ब्रह्मराक्षसकुल, परबल, नागकुल विषं निर्विष कुरुकुरु स्वाहा। २२

द्वाविंशोत्तर शतवर्णोऽयंदश मो मनुः
सर्वशूल हरोनॄणां ब्रह्मराक्षस नाशकः ॥ २३

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं नमो हनुमते सर्वदुष्टग्रहा नुच्चाट योच्चाटय। परबलं क्षोभय क्षोभय। शृङ्खला बन्धनं मोक्षय मोक्षय। सर्वकार्याणि साधय साधय। परमन्त्र यन्त्रान् छेदय छेदय स्वमन्त्र यन्त्राणि प्रकटय प्रकटय। ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः घेघे खेखे हुं फट् स्वाहा॥ २४

अयमेकादशो मन्त्रः - त्रीणि नवत्युत्तरान्वितः
सर्वशत्रुक्षयकरो - शृङ्खला बन्ध मोक्षकः
परेषां यन्त्रमन्त्रादे विच्छेदस्य च कारणम्॥ २५

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं नमो हनुमते पवनपुत्राय वैश्वानर मुखाय। पापदृष्टि चोरदृष्टि भञ्जय भञ्जय। विषम दृष्टि छेदय छेदय। शं घ्रं मम अग्रतः स्फुर स्फुर। ह्रां ह्रीं ह्रूं फट् स्वाहा। २६

अयं द्वादश मन्त्रो वै - दीपार्थव हनूमतः
ऋषिभिः कथितः पूर्वं - सप्तषष्ट्यक्षरोमनुः॥ २७
सर्वपाप विशुध्यर्थं - सर्वदोष निवारणम्
सहस्र द्वितयं प्रोक्तं - षड्विंशोत्तर सख्यया॥ २८

इमे द्वादश मन्त्रावै - दीपार्थं च हनूमतः
मुनिभिः कथिता पूर्वं - मन्त्रविद्भिः पुरातनैः ।।

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री हनुमद्द्वादश माला मन्त्र कथनं नाम पञ्चाशीतितमः पटलः

* * *

# श्री पराशर संहिता

## षडशीतितमः पटलः

### -- मन्त्र साधन कथनम् :-

पराशरः ।

ओं स्प्रें ख्प्रें ह्सौं ह्स्ख्प्रें ह्सौं - एषा पञ्चाक्षरी

ओं ह्रौं स्प्रैं ख्प्रें ह्सौं ह्स्स्प्रें ह्सौं हनुमते नमः - द्वादशाक्षरी

ओं अस्यश्री हनुमत्पञ्चाक्षर द्वादशाक्षर मालामन्त्राणां श्रीरामच
षिः । नाना छन्दांसि । सर्वकार्यं साधको महावीर हनुमान् देवत
तात्मज इति ह्सौं इति बीजं । अञ्जनासूनुरिति ह्ख्प्रें इति शक्ति
इति कीलकं । श्रीरामभक्त ह्लां इति प्राणः । श्रीरामलक्ष्मणानन्दक
ह्लीं ह्लूं इति जीवः । मम परस्य च सर्वदा नाना विश्वेप्सि
सिध्यर्थे सर्वदेह रक्षणार्थं हनुमन्मन्त्राणां जपमहं करिष्ये । मूलेन करशु
ाय । प्राणायामान् कृत्वा । श्री हनुमते नमः ।

ओं ऐं श्रीं ह्लां ह्लीं ह्लूं स्प्रें ख्प्रें ह्सौं ह्स्स्प्रें ह्सौं नमोनम
ते अंगुष्ठाभ्यां नमः । हृदयादिन्यासः । पुनरेकादशबीजैः । रामदूता
नी । शिरसे पुनस्तथैव बीजैः ।

लक्ष्मण प्राणदात्रे मध्यमा । शिखायै पुनस्तद्बीजैः
अञ्जनासूनवे अनामिका । कवचाय पुनस्तद्बीजैः ;

सीताशोक विनाशनाय कनिष्ठिका। नेत्रत्रयाय पुनस्त लङ्का प्रासाद भञ्जनाय कूर्पं पादाभ्यां। मस्तकावधि पुनः विनाशाय मणिबन्ध मस्तकाञ्चरणावधि। ब्रह्मास्त्र ब्रह्मशक्ति करतलकर पृष्ठाभ्यां। अत्रे विन्यसेत्।

अथ ध्यानम्:—

श्लो।। ध्यायेद्बालदिवाकरद्युति निभं देवारि दर्पावहं
देवेन्द्रप्रमुखैः प्रशस्त यशसं देदीप्यमानं रुचा
सुग्रीवादि समस्त वानरयुतं सुव्यक्त तत्वप्रियम्
संरक्तारुण लोचनं पवनज पीतांबरालंकृतम्।।

श्लो.। मनो जवं मारुततुल्य वेगं जितेन्द्रियं बुद्धिमतां व
वातात्मज वानरयूथ मुख्यं श्रीरामदूतं शिरसा न

श्लो।। वामे करे वैरिभिदं वहन्तं शैलं परे श्रृङ्खलहार क
घण्टा निनादेन निरस्त विघ्नं भजे ज्वलत्कुण्डलम

श्लो। वज्राङ्गं पिङ्ग केशाढ्यं - स्वर्णकुण्डल मण्डितम्
नियुद्धमुप सङ्गम्य - पारावार पराक्रमम्।।
वामहस्ते गदायुक्तं - पाशहस्तं कमण्डलम्
ऊर्ध्व दक्षिण दोर्दण्ड - हनुमन्तं विचिन्तयेत्।

व।। अरेमल्ल चटखेत्युच्चरेण मुद्रां प्रदर्शयेत् अथवा तोडरमल्ल
च्चरेण कपि मुद्रां प्रदर्शयेत्।।

श्लो।- ततोऽर्कास्तं समारभ्य - यावत्सूर्योदयो भवेत्
तावन्मन्त्र जपे द्रात्रौ - कार्यमुद्दिश्य मन्त्रवित्।।

अथ जाप्य मन्त्रः:-

ओं ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्सौं

श्लो।। पुरश्चर्यास्य मन्त्राणां - प्रोक्ताचार्क सहस्रिका
भौमस्य वासरेपूजा - कार्या हनुमतो धृतम्।।

प्रियङ्गवो व्रीहयोऽथ दध्याज्य क्षीर संयुताः
कदली मातुलुंगाम्र - फलैर्नानाविधैर्हुनेत् ॥
दशांशेन ततो ब्रह्मचारिणो भोजयेद्ध्रुवम्
द्वाविंशति च संख्याकान् - हनूमत्प्रीतये सुधीः ॥
अष्टोत्तरशते नाभिमन्त्रयेद्भस्मवारिणा
ग्रहदोषे विषेचैव मार्जये त्पाययेत्तनुम् ॥
हनुमत्प्रतिमा कार्या - ततो भूतांकुशस्य च
पूर्वोत्तरगतेनैव - मूले नांगुष्ठ मात्रतः ॥
सर्वावयव सम्पन्ना चित्रप्राशस्त्यकारिता
प्राण संस्थापनं चैव - कृत्वा वै मारुतेर्ध्रुवम् ॥
सिन्धूर चर्चितां कृत्वा - तथाभ्यर्च्यो प्रचारकैः
मन्त्रिता तेन मन्त्रेण - ततस्तां द्वारदेशके ॥
खनित्वा निक्षिपेद्भूमौ - गृहस्याभिमुखं न्यसेत्
भूतजा विषजा बाधा ग्रहजा कूटमन्त्रजाः ॥
चेटिकादि भवा वापि - व्याधि ज्वरभिघातजा
चोराग्नि बाधाऽपि तथा - नभवेद्ग्रहवैरिजा ॥
तद्गृह नन्दते सर्वं - समृद्धि धनसंयुतम्
रात्रौ रात्रौ जपेन्मन्त्रं - पट्शतं त्रिशतं तथा
दशवासर पर्यन्तं - राजशत्रुभयं हरेत् ॥
अभिचारज्वरे भूत - ज्वरेच भस्मना शुभम्
मन्त्रितं तांभरा बाऽथ - ताडयेद्दोष पूर्वकम् ॥
त्रिदिनैर्ज्वर मुक्तस्स्यात् - नात्र कार्याविचारणा ॥
औषधेच रसे मन्त्रं - दशवारं जपेद्बुधः
तेनाभि मन्त्रितं तोयं - भस्म तस्य प्रदापयेत् ॥
दारुण दावाग्नि संस्तम्भे - शतवार जपेद्बुधः
भस्मना चर्चितं देहं - पयश्चप्राशितंध्रुवम्

शस्त्रस्तम्भो भवेत्तस्य - सत्यं सत्यं न संशयः
शस्त्रक्षतेषु लूतासु - रक्तग्रन्ध्यादि सम्भवे ॥
भस्मना पायसा तत्र - त्रिवारं चाभिमन्त्रयेत्
न व्यथा न च पूयं स्यात् - संशोषयति सव्रणम् ॥
सप्तवासर पर्यन्तं - विद्वेषोच्चाटने जपम्
सूर्यास्तं च समारभ्य - कार्ये त्सुबुधोत्तमः ॥
अरुणोदय पर्यन्तं - भस्मकीलाल मन्त्रितम्
तद्वारि पूरितं गेहे - रोपितं चाथ तत्क्षणात्
ततस्त स्योच्चाटनं स्या - त्परिवारयुतस्य च ॥
पुत्रादिभि स्सर्व लोकैः - पौरैर्जानपदै स्तथा
विद्वेष्यते प्राणघातं - सत्यं सत्यं वचोमम ॥
भस्मांबु मन्त्रितं यस्य - देहे चन्दन मिश्रितं
चर्चितं पञ्चखाद्यादि - योजितं तत्र दापितम् ॥
स वश्यो जायते नूनं - प्राणै रपि धनै रपि
वशतां याति देवोऽपि - मनुष्येषु चका कथा ॥
क्रूर सत्वानि सर्वाणि वशयेदमुना खलु
प्राकारेण महावीर - ज्वलनः शांतिता मिह
दिव्यस्थाने च कर्तव्यं - निश्शक्ति श्च हुताशनः
भवत्येव न सन्देहो - तिल तैलेषु संस्थितः ॥
मारणे क्रुद्धचित्तेन - रात्रौ श्मशान भूतले
रिपोः प्रतिकृतिं कृत्वा - भस्मना वा मृदाथवा ॥
पूर्ववत् प्राणसंस्थां च - कृत्वा यत्नेन मन्त्रवित्
प्रतिमा हृदि तन्नाम - लेख्यं चैव प्रयत्नतः ।।
शस्त्रभेदं प्रतिमन्त्रोच्चारं क्रुद्धं पुनः पुनः
छिंदि छिंदि मारयेति तन्नामांते समुच्चरेत् ॥
एवं सप्तदिनं कुर्याद्दन्तै रोष्ठं निपीडय च
कृत्वा प्रपीडनं पाणितलयो र्दुष्ट मात्मनः ॥

होमः कार्यः तत्रचाथ - राजिका लवणै स्सह
उन्मत्त फलपुष्पै श्च - श्लेष्मातक विभीतकैः ॥
विष रोम नखैः काक - कौशिकै श्चैव गृध्रकैः
पक्षकैः कटुतैलाक्तै रथं चन्द्राकृतौ हुनेत् ॥
स्थंडिले मुक्तकेशस्तु - सूकर्या मुद्रया बुधः
दक्षिणाशामुखो भूत्वा - पल्लवोच्चारणं कुरु ॥
त्रिशतावृत्ति होमेन - सप्तवासर मध्यतः
शत्रुर्मृत्यु मवाप्नोति - रुद्रेणापि सुरक्षितः ॥
दिनत्रयं रात्रिभागे - श्मशाने षट्शतं जपेत्
प्रेतमुत्थापये त्सत्यं भेतालः किंकरो भवेत् ॥
भस्मांबु मन्त्रितं रात्रौ - सहस्राहुतिकं कुरु
शुभा शुभं च वदति - मन्त्रिणा सह निश्चयम् ॥
दिनत्रय ततश्चैव - तत्क्षिपे त्प्रतिमासु च
[illegible]पा ब्रवीति सत्यं च - कारयिष्यन् करिष्यति ॥
[illegible]नु कासु च स्थूलासु - लघुष्वपि विशेषतः
[illegible]प्रभावा च्चलनं - भवत्येव न संशयः ॥
[illegible]न्त्रेणानेन सिद्धेन - यदसाध्यं च साधयेत्
[illegible]ये भये विवादे च - शस्त्रे संग्राम सङ्कटे ॥
[illegible]त दिव्ये स्तम्भने च - विशेषो मारणं तथा
[illegible]तकोत्थापनं चैव - प्रतिमाचालने शुभम् ॥ १
[illegible]पे बाधाज्वरे भूत - ग्रहे कृत्या विमोचने
[illegible]ते ग्रन्थौ महारण्ये - दुर्गे व्याघ्रे च दन्तिनि ॥ २
[illegible]र सत्वेषु सर्वेषु शस्त्रबन्धे विमोक्षणे
[illegible]भगोले मारणे च - मोहे शान्तौ नियोजयेत् ॥ ४
[illegible] मेन हनुमतो - नानाकार्य प्रसाधनम्
[illegible] मासं जपेन्मंत्री रात्रौ रात्रौ च निर्भयः ॥ ५

लिखित्वा प्रतिमां भूमौ - माहते रखिलां नरः
स्व नामाक्षर संघं तु - द्वितीयांतं समालिखेत ॥
मन्त्रस्यान्ते तथा मां च - विमोचय बिमोचय
मार्जये द्वामहस्तेन - पुनस्तथैव लेखयेत् ॥
एव मष्टाधिक शतं - मार्जये ल्लेखये न्नरः
एवं कुर्वन्निवद्धो यः - श्रृङ्खलाभिर्दृढं नरः ॥
महापराध संक्रुद्धो - प्राण हाऽनर्थकारकः
स सप्तदिन मध्ये तु - बन्धना न्मुच्यते सुखम् ॥
हनुमान् स्वयमे त्याशु - स्वयं तं मोचये न्नरम्
न तं दण्डयितुं शक्ता - राजानो रिपवो जनः ॥
हवनान्यपि स त्यत्र - दशांशे नेति बोधया
स्तम्भने चणकान् माषा - न्यग्रोधस्य फलानि च ॥
हरिद्रा च तथा प्रोक्ता - तालकं भल्लकी फलम्
शालमली कुसुमा न्याहु - मधुत्रय समन्वितम् ॥
उच्चाटे गदित स्तत्र - श्लेष्मातक विभीतकाः
वश्यार्थे सर्षपाद्राक्ष - मधूकानि च गुग्गुलुः ॥
विद्वेषे करवीराणां - पत्राणि समिधस्तथा
श्लेष्मातक विभीतानां - समिधो जीरकं तथा ॥
मरीचं रामठं चैव - कटुतैल समन्वितम्
ज्वरे तापेच शूले च - गण्डमाला भगन्दरे ।
दूर्वा गुडूची खण्डानि - साध्य क्षीर दधीनि च
शूले त्वेगण्ड समिधः - कुबेराक्षि स्तथैवच ॥
निर्गुण्ड समिधश्चैव - तिल तैल समन्विताः
लक्ष्मी प्राप्ता सरोजानि - बिल्वपत्राणि चैव वा ॥

समिधस्तस्य होतव्या - मधुत्रय समन्विताः
पञ्च खाद्यं नारिकेल - मिक्षवः कदलीफलम्
सर्व सन्तोष कृद्धोमो - मधुत्रय समन्वितः ॥ ५
सौभाग्य सर्वसम्पत्ति - साधकं हवनं श्रुणु
कर्पूरं केसरं नाभि - श्चन्दनं रोचनां तथा ६
तेज पत्रं वारणं च - लवंगै लागुरुं तथा
मांसी नखं जाति पत्रं - तःफलं लोहमारकम् ॥ ६
साज्यान्येतानि सर्वत्र - विज्ञेयानि मनीषिभिः
पुष्पं स्सुगन्धिभि र्यापः प्राप्तयो चोत्तमं विदुः ॥ ६
द्रोहं च मारणे ज्ञेयं - विषं च राजिका तथा
काक कौशिक गृध्राणां - पक्षाश्च विजये तथा ॥ ६३
गृहधूम कणाश्चैव - लवणं कटुतैलकं
पादपांसु स्तथा राजी - लवणी कर्षणे स्मृतम् ॥ ६४
उन्मत्त फल पुष्पाणि - समिधो मोहने तथा
धान्यै स्संप्राप्यते धान्य - मन्ने नान्न समृद्धयः ॥ ६५
तिलाज्य क्षीरदधिभि र्महिषी गो समृद्धयः
एवं नाना प्रयोगाणां - साधये न्मन्त्र वित्तमः ॥ ६६
पुरश्चर्या जपे नैव - हनुमन्तं च सेवयेत्
सर्वत्र सर्वभूतानां - नाशको हनुमन्मनुः ॥ ६७
भस्मवारि सर्पपांश्च - सिकतामभिमन्त्रयेत्
यत्रक्वापि भयं शङ्का - विकिरेत्तत्रतत्रतु ॥ ६८
पानार्थं वारि दातव्यं - भस्मचांगे निवेशयेत् ६९
अन्यद्रहस्यं वक्ष्यामि - मैत्रेय श्रुणु तत्त्वतः
सर्वलोकोपकाराय - गुह्याद्गुह्यतमं मुने ॥ ७०
स्थापयेच्छान्ति पुष्ट्यर्थी - प्राङ्मुखं वायुनन्दनम्
तथा शत्रु विनाशार्थी - स्थापये द्दक्षिणं मुखम् ॥ ७१

लङ्का विलोकयन्तं च - वीर रूपं महाबलम्
वश्यार्थी पश्चिमं मुखं - मोक्षार्थी चाप्युदङ्मुखम् ।।
देवताभिमुखं कुर्या - द्देवतांतर सन्निधौ
देवतांतर सान्निध्ये - न प्राधान्यं हनूमतः ।।
स्थापये त्सर्व कार्यार्थी - पूर्वाभिः मुख मुत्तमम्
सर्वेषा मेव कार्याणां - प्राची सिद्धिकरी यतः ।।
अर्चकस्य तपोयोगात् - जायाश्चाति गायनात्
अभिरूपाच्च बिंबस्य - तत्र सन्निहितो हरिः ।।
दैवते च गुरौ योगिन् - मनो वाक्काय कर्मभिः
आसक्त स्सततं यस्तु - दृढ भक्तः स उच्यते ।।
अथात स्संप्रवक्ष्यामि - सर्वलोक वशीकरम्
देव रक्षाकरं नृणां - सदा विजय कारकम् ।।
एला लवंग कर्पूर - कस्तूरी जाजिपत्रकम्
श्वेतार्क गुञ्जा मूलं च - कुङ्कुमागरु चन्दनम् ।।
विष्णुक्रान्त मुशीरं च - कपि कोशातकी रसम्
गोरोचकं शिखी चान्या - रक्त चन्दन मेव च ।।
रक्तातसी प्रसूनं च - रक्त पद्मदलानि च
समभागेन संगृह्य - पेषये च्छुद्ध वारिणा ।।
शुक्ल पक्षेऽर्क वारे च - कन्याहस्तेन पेषयेत्
विधाज वटुकान् सद्यः - छायया शोषये द्बुधः
तस्योपरि प्रयत्नेन - चन्द्र सूर्योपरागयोः
सप्त मन्त्रात्मिकां विद्या - मष्टोत्तर शतं जपेत् ।।
अष्ट विंशतियो वापि - जपेद्विद्या नतन्द्रितः
धृत्वा वामकरे सम्यक् - वटुकान् मुनिसत्तम
द्वादशावृत्ति मात्रेण - जुहुयाद्गोघृतेन च ।।
ब्राह्मणान् पञ्च संख्याकान् - यथेष्टं भोजये त्ततः ।।

वटुकं तच्च संपेष्य - ललाटे तिलको भवेत्
यद्वा देहाङ्ग रागोवा - तं दृष्टवा वशगो भवेत् ।।
राजद्वारे सभामध्ये - व्याघ्रसिंह भयेऽपि च
युद्धे सङ्कटकालेवा - सर्वत्र जय माप्नुयात् ।।
इत्थं यस्तिलकं करोति पुरुषः प्रेम्णा ललाटे स्वके
नित्यं तस्य वशाभवन्ति पुरुषा नार्योपि लोकस्थिता:
भूपा दासव दाचरंति सदसि प्रागल्भ्य मुज्जृम्भते
लक्ष्मी स्तस्य मुखारविन्द निलया जागर्ति कीर्तिर्भुवि

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
मन्त्रसाधन कथनं नाम षडशीतितमः पटलः

* * *

# श्री पराशर संहिता

## सप्ताशीतितमः पटलः

-: वशिष्ठ महर्षि प्रोक्तं श्री हनुमत्कवचम् :-

श्री मैत्रेयः :

श्लो।। महापाप विशुध्यर्थं - वीक्षितं स्तोत्रमुत्तमम्
बृहि मे कुशलं ब्रह्मन् - येन सद्यस्सुख भवेत् ।।

श्री पराशरः -

श्लो।। श्रृणुष्व सावधानेन - मैत्रेय मुनिपुङ्गवः
अस्तिकिञ्चि न्महद्गोप्यं - सर्वं सम्पत्समृद्धिदम् ।।
वक्ष्ये लोकहितार्थाय - स्तोत्रं नाम सहस्रकम्
वामदेवादि विप्राणां - बालखिल्यादि योगिनाम् ।।

वसिष्ठेन पुराप्रोक्तं - सर्वलोक हिताय वै
वक्तॄणां सुखदं सद्यः - श्रोतॄणां सर्वं कामदम् ॥
गन्ध मादन शैलस्य - पुण्यस्योपरि संस्थितम्
सुखासीनं ब्रह्मपुत्रं - वसिष्ठं द्रष्टु मिच्छतः ॥
वालखिल्यादयोः वाम - देवाद्याः परमर्षयः
अभ्यागम्य वसिष्ठं तं - नमस्कृत्य यथाक्रमम् ॥
पूजिता ऋषय स्सर्वे - तमूचुः प्रियपूर्वकम्
हे ब्रह्मन् ! याचितास्माकं - त्वयैवाति शुभप्रदम्
उक्तं पूर्वं हनुमतो - - विक्रम जगदुत्तमम्
त्वदन्यः कस्समर्थोत्र - हनूमत्कवच शुभम्
विख्यातानि सहस्राणि - नामानि विविधानि च ॥
कवचं तु पुरा राम - चन्द्राद्यैर्जप्य मादरात्
हे ब्रह्मात्मज ब्रह्मन् वै - यथा तत्कथयस्व नः ॥
कानि नामानि किंछन्दः - को ऋषिः किं च दैवतम्
को मन्त्रः केन दिग्बन्धः - को विधिः किं फलं स्मृतम्
सर्वं कथय मे ब्रह्मन् ! - कवचेन समन्वितम्
इत्युक्तं मुनि वाक्यं तु - सावधानेन सर्वशः ॥
श्रुत्वोवाच वसिष्ठश्च - सस्मितः परमर्षिभिः
भवन्त एव सर्वज्ञाः - त्रिकाल ज्ञा जगत्त्रये ॥
मदनुग्रह एवैषा - याच्ना हि परमर्षयः
एत त्प्रश्नं महापुण्यं - रहस्यं परमाद्भुतम् ॥
कथयामि मुनिश्रेष्ठा - यत्पृष्टोह मशेषतः
शृणुध्वं हि यथा सर्वं - यथातत्वं सुविस्तरात् ॥

वसिष्ठ उवाच :—

अस्यश्री हनुमद्दिव्य कवचस्तोत्र मन्त्रस्य श्रीरामचन्द्र भ ऋषिः । अनुष्टुप्छन्दः । श्री हनुमान् देवता । नमो वातात्मजाय

बीजं । श्री आञ्जनेयाय इति शक्तिः । मर्कटायेति कीलकं । श्री ह
निति मन्त्रः । वज्रकाय इति कवचं । बलवानिति योनिः । दंष्ट्रायुध इ
वेश्वर इति ध्यानम् ।

थ अङ्ग हृदयन्यासः :-

अञ्जनासुताय - अंगुष्ठाभ्यां नमः । रुद्रमूर्तये - तर्जनीभ्यां
वायुपुत्राय - मध्यमाभ्यां नमः । अग्निगर्भाय - अनामिकाभ्यां
सुवर्चला कलत्राय - कनिष्ठिकाभ्यां नमः । ब्रह्मास्त्र निवारण
करतलकर पृष्ठाभ्यां नमः । अञ्जना सुताय - हृदयाय नमः
मूर्तये - शिरसे स्वाहा । वायुपुत्राय - शिखायै वषट् । अग्निगर्भ
कवचाय हुं । सुवर्चला कलत्राय - नेत्रत्रयाय वौषट् । ब्रह
निवारणाय - अस्त्राय फट् । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यानम्:-

श्लो।। ध्याये द्बाल दिवाकरद्युति निभं देवारि दर्पापहम्
देवेन्द्र प्रमुखैः प्रशस्त यशसं देदीप्यमानं रुचा
सुग्रीवादि समस्त वानरयुतं सुव्यक्त तत्त्वप्रियम्
सरक्तारुण लोचनं पवनजं पीताम्बरालङ्कृतम् ।।
प्राच्या वज्रतनुः पातु - आग्नेय्या मग्निगर्भकः
याम्या सा त्वञ्जनीपुत्रः - शोकघ्नः पिङ्गलेक्षणः
नैरृत्यां पातु दैत्यघ्नो वारुण्या मखिलङ्कनः
वायव्यां वायुजः पातु - प्रयत्ने नोत्तराः दिशम् ।।
पातूत्तर चोषधाय - गम्य स्सर्वदाऽवतु
ईशान्या मीशसम्बन्धः - पातु यत्नेन नान्यथा
ऊर्ध्वं मूर्ध्वोन्नतः पातु - अधः पाताल साधकः
हनूमत श्च मन्त्रस्य - लक्षणं कथयाम्यहम् ।।

त्र।। ओं श्री हनुमते महा पराक्रमाय ममच । सर्वकार्याणि सा
हुं फट् स्वाहा ।

श्लो॥ इति तन्मन्त्र पूर्वं च - वक्ष्यामि कवचं ततः
त्रिशिरोघ्नः शिरः पातु - फालं फालेक्षण प्रभः ॥
करौ पा त्विभकर्णघ्नः - तथाक्षीण्यक्ष संहरः
हनुमन्मे हनू पातु - नासिकां धूमनासजित् ॥
चतुर्वक्त्रहरो वक्त्रं - पातु दन्तानि सर्वदा
शूलदंष्ट्रजितः पातुः - जिह्वां मे दीर्घ जिह्वहा ॥
भुजौ भुजायुधः पातु - स्कन्धौ मे सन्धिकारकः
अङ्गुलीः पातु रामस्य अङ्गुलीयक धारणः ॥
नखा नखायुधः पातु - लङ्किणी भञ्जन स्तनौ
वक्षः पा त्वक्ष रक्षघ्नो - महोदरहरोदरम् ॥
केसरी नन्दनो मध्यं - पातु सर्वप्रयत्नतः
नाभिं पातु सदा पद्मनाभस्य निजभक्तिमान् ॥
पृष्ठं पातु रणेऽपृष्ठ - नो देवः सर्वदा हितः
गुदं रक्तागुदः पातु - गुह्यं गुह्यस्सलिङ्गकः ॥
ऊरू पा त्वहिकांसोरु - भञ्जनो भीमस-वकः
स्थूल जङ्घास्य संहारः - पातु म ज्जङ्घयो द्वयी ॥
दैत्यानां शीर्ष विन्यस्त - पादः पात्वनिशं पदौ
यत्नेन सर्व मर्माणि - मर्मज्ञं पातु सर्वदा ॥
रक्तरोमाह्वय ध्वंसी - रोमकूपानि पातु मे
अहः पा त्वहक्क द्वन्द्वो - रात्रौ रात्रि जयादिकः ॥
सध्यां सन्धानकरणीं - रामा यानीय दत्तवान्
सर्वदा पातु मे मोहात् - सर्वदा विजयप्रदः ॥
जले ग्रहहरः पातु - वने लङ्कावनांतकृत्
स्थले भीमाग्रजः पातु - गिरौ गिरिचरेश्वरः
संग्रामे बलवान् पातु - अग्नौ लङ्का विदाहकः
गृहे मां पातु सर्वत्र - कदलीवन मन्दिरः ॥

हनूमत्कवचं यस्तु - पठे द्विद्वा न्विचक्षणः
तत्फलं पुरत स्सर्वं - वक्ष्याम्याहो मुनीश्वराः ॥
तत स्सहस्रनामाख्यं स्तोत्रं श्रुण्वन्तु वक्ष्यते ॥
चन्द्राभं चरणारविन्दयुगलं कौपीन मौञ्जीधरम्
वालं श्रोणिधरं दुकूलसनं यज्ञोपवीतं धरम्
हस्ताभ्या मवलम्बिताञ्जलिपुटं हारावली कुण्डलम्
पश्चाल्लम्बि शिखः प्रसन्नवदनं श्री आञ्जनेयं भजे ।

–ः श्री हनुमद्गुण सहस्रनाम स्तोत्रम् ः–

श्लो॥ श्री हनूमा नञ्जनासूनुः - वायुपुत्रो महाबलः
केसरी नन्दन श्श्रीमा न्विश्व कर्मार्चित ध्वजः ॥
ईश्वरांश स्स्वयं जातो पार्वतीगर्भ सम्भवः
सुचिरं मातृगर्भस्थो - गर्भवैष्यव संस्कृतः ॥
ब्रह्मचारी जवा ज्ञातः - सर्वविद्याविशारदः
मातृगर्भस्थ नटनो - हरिध्यान परायणः ॥
श्रोणानक्षत्रज स्सूर्यगिलनः कपिवल्लभः
वज्रदेहो महाबाहु - जगदाश्चर्य शैशवः ॥
कालेन सह युद्धार्थ - कालदण्ड प्रहारकः
कालकिंकर संहारी - कलांतक विमर्दनः ॥
नखायुध स्सर्वजयो - रणशूरो भुजायुधः
शैलविक्षेपको भूज - विक्षपे पादघट्टनः ॥
वालपाशायुधो दंष्ट्रायुधः पवन साहसः
निरायुधजयो यातुधानजिद्वार पुङ्गवः ॥
प्रचेतसरिपुर्भूत - रक्षघ्नोऽर्चित निग्रहाः
ईशान स्सग्रहः केशी - सुतगर्व विनाशनः ॥
अद्रिकृन्मित्रकृद्भोजी - स्नेहकृ न्मेघनिर्जितः
पुरन्दरधनु श्छेत्ता - मातले र्मरभञ्जनः ॥

ब्रह्मास्त्र स्तम्भनो रौद्र - बाण निग्रहणेनिलः
ऐरावत बलच्छेदी - वृत्रारेर्गर्व भञ्जनः ॥
योगनिद्रासक्त मनो - जगत्संहार कारकः
विष्टो रागमनोगाय - कारणः पुनरुद्धितः ॥
नक्तं च राहुतोद्धर्ता - सर्वेन्द्रिय जित श्शुचिः
स्वबलाबल विज्ञातः - कामरूपी महोन्नतः ॥
पिङ्गलाक्षो महाबुद्धि - स्सर्वत्र मातृसदृशी
वनेचरो वायुवेगी - सुग्रीव राज्य कारणः ॥
वाली हननकृत्प्राज्ञो - रामेष्ट. कपिसत्तमः
समुद्रतरण च्छाया - ग्राही भेदन शक्तिकः ॥
सीतागवेषण श्शुद्धः - पावनः पवनोऽनलः
अतिप्रवृद्धो गुणवान् - जानकी शोक नाशनः ॥
दशग्रीव वनोत्पाटी - वनपालक निर्जितः
बहुरूपो वृहद्रूपो - जरामरण वर्जितः ॥
रत्नकुण्डल धृद्धीमान् - कनकाङ्ग स्सुरारिहा
वक्रनासाऽसुरघ्नोथ - अक्षहा सर्वरूपधृत् ॥
शार्दूल मुखजि त्खड्गरोमजि द्दीर्घजिह्वहा
रक्तलोचन विध्वंसी - स्तनितस्मितवैरिणः ॥
शूल दंष्ट्राहतो वज्र - कवचारि र्महाभटः
जम्बुमालिहरोऽक्षघ्नो - कालपाशानन स्थितः ॥
दशास्य वक्ष स्सताड्यो - सप्तमन्त्रि सुतांतकः
लङ्किणी मर्दन स्सौम्यो - दिव्यमङ्गल विग्रहा
रामप्रीतो शुभो वार्ता - सख्यात स्सीतयार्चितः
लङ्काप्रासाद विच्छेदो - निश्शङ्कोऽमित विक्रमः ॥

एकवीरो महाजङ्घो - मायाप्राणापहारिणः
धूम्रनेत्र प्रमथनो - कालाग्नि सदृश प्रभः ॥
अकम्पन मदाहारी - निग्रहो वीरपुङ्गवः
विशालशौर्य संहर्ता - त्रिशराख्य विमर्दनः ॥
कुम्भवैरी दशग्रीव - दोरन्तर विभेदकृत्
भिषक्पति महावैद्यो - नित्यामृतकर श्शुभः ॥
धन्वन्तरी जगत्त्राता - ओषधीशो निशांपतिः
दिव्यौषधा द्यानयनो - मृतवानर जीवनः ॥
सञ्जीवनौषधी नेता - सञ्जीवो जीवनप्रदः
संग्राम निपुणो ब्रह्मा - सर्वलोक पितामहः ॥
इन्द्रजिद्घातकोऽत्यन्त - प्रताप पटुभीकरः
माल्यवन्त प्रमथनः - सौमित्रि जीवदायकः ॥
स्थूलजङ्घजित स्थूलो - महानाद विनिर्जितः
महादंष्ट्रांतकः क्रोधो - महोदर विनाशकृत् ॥
महोरस्को सुराराति - रुल्कामुख निकृन्तनः
महावीरजित स्सूक्ष्म - श्चतुर्वक्त्र विदारणः ॥
हस्तिकर्णाहत श्शङ्कुकर्ण शत्रुर्महोज्वलः
मेघान्तकः कालरुद्रो - जिताराति र्जगत्पिता ॥
सर्वलक्षण लक्षण्यो - भेषजाद्रि प्रतिष्ठितः
दुर्गं वालेन कुर्वाणः - प्लवङ्गबल रक्षकः ॥
पातालङ्का गमनो दुर्दण्डी बन्ध मोचकः
बहुरूपो बृहद्रूपो - सर्वलोक पितामहः ॥
मत्स्यवल्लभ सत्राता - भीकराक्ष निकृन्तनः
भेदीवच शिरच्छेदी - व्योमवीक्षण सूदनः ॥
निर्घातक विनिर्जितो - ऊर्ध्ववक्त्र विदारकः
निर्घोषकस्य विध्वस्तो - तीव्रघोराननांतकः ॥

आस्फोटसैन्य विद्वेषी - मैरावण विभञ्जनः
मैरावण मन्त्रिहारी - प्राणभ्रमर घातुकः ॥
जगदेक स्फुर द्वीर्यो - नीलमेघस्य राज्यदः
रामलक्ष्मणयोद्धर्ता - असहायजय श्शुभः ॥
रावणश्शोकदाता च - रावणारेस्तु वाहनः
श्रीरामजयकृ द्विभीषण राज्यप्रदायकः ॥
दुर्होमे विघ्नकृ त्सर्व - किल्बिषोपाय नाशनः
गुहप्राण प्रतिष्ठाता - भरतप्राण रक्षकः ॥
कविः कपीश्वरो काव्यो - महानाटक काव्यकृत्
गुण्ड क्रियकृतो गान - गान विद्या विशारदः
चतुष्षष्टि कलाध्यक्षः - सर्वज्ञः सर्वशास्त्रवित्
सर्वशक्ति निरालम्बः - कूर्मपृष्ठ विदारणः ॥
ध्वजरूप स्सदापूज्यो - भीमप्राणाभिरक्षितः
ताण्डवेशः परंब्रह्मा - परमात्मा परंपदम् ॥
पञ्चवक्त्रो हयग्रीवः - पक्षिराजोऽ परश्शिवः
नारसिंहः परंज्योति - र्वराहः प्लवगेश्वरः ॥
महोरस्को महातेजा - महात्मा भुजविंशतिः
शैलभृद्भूरुहो खड्गी - शङ्खचक्रगदाधरः ॥
नानायुधधर श्शूली - धनुर्वेद विशारदः
धनुर्वेदविदो हारी - कवची दिव्यबाणधृत् ॥
ताटकासुर संहारः - स्वयम्भू र्निटलम्बकः
ब्रह्मात्मा ब्रह्मकृद्ब्रह्मा ब्रह्मलोक प्रकाशिणः ॥
श्रीकण्ठ श्शङ्कर स्थाणुः - परंधामा परागतिः
पीताम्बरधर श्चक्री - व्योमकेश स्सदाशिवः
त्रिमूर्त्यात्मा त्रिलोकेशः - त्रिगुणो त्रिदिवेश्वरः
वासुदेवः परं व्योम - परतत्त्वो परोदयः ॥

परज्ञान परानन्दः - परोऽव्यक्तः परात्परः
परमार्थः परोद्योगी - परश्रेयः परेश्वरः ॥ ८६
परार्थ स्सर्वतो भद्रो - निर्विकल्पो निरामयः
निराश्रयो निर्विकारो - निर्लेप स्सर्वदुःखहा ॥ ८७
ब्रह्मविद्याश्रयोऽनशो - नीहारा निरवध्यह
निर्भयः चतुरानन्दो - निष्कलस्सर्वभावनः ॥ ८८
अभयोऽतीन्द्रियो चिन्त्यो - निराहारो निरञ्जनः
अक्षय स्सर्वसंश्लिष्टो - सर्वदृक् नित्यचिन्मयः ८९
अच्युत स्सर्वग स्सर्व - फलदः पुरुषोत्तमः
सर्वावास स्सर्वसाक्षी - सर्वस्सर्वातिशायिकः ॥ ९०
सर्वसार स्सर्वरूपो - सर्वात्मा सर्वतोमुखः
सर्वशास्त्रो महागुह्यो - सर्वार्थ स्सर्वकारणः ॥ ९१
वेदान्तवेद्य स्सर्वादि - नित्यानन्दो महा हविः
सर्वेश्वरो महाविष्णु - र्नित्ययुक्त स्सनातनः ॥ ९२
षड्विंशको योगपतिः - योगगम्य स्वयंप्रभुः
मायागर्जीभवोनप्रचो - भवबन्धैक मोचनः ॥ ९३
पुराण पुरुष स्सत्वो - तापत्रय विनिर्जितः
नित्योदित श्शुद्धबुद्धो - कालातीतो पराजितः ॥ ९४
पूर्णो जगन्निधी हंसः - कल्याण गुण भाजनः
दुर्जयः प्रकृतिस्वामी - सर्वाश्रयमयोदितः ॥ ९५
योगिप्रिय स्सर्वसारो - तारक स्तन्तुवर्धनः
अन्तर्यामी जगन्नाथः - स्वरूप स्सर्वतस्समः ॥ ९६
कैवल्यनाथ कूटस्थ - स्सर्वभूत वशंकरः
सङ्कर्षणोऽभयङ्करः - कालस्सत्यसुखैकभूः ॥ ९७
आर्यो निश्चल स्सर्वसाक्षी - निरुपाधिप्रियो हरिः
नाहवादी हृषीकेशो - प्रथमोन्तो जगन्मयः ॥ ९८

अनन्तश्री विश्वबीजो निश्चयो सर्व वीर्यजित्
स्वप्रकाशः सर्वगीतिः - सिद्धार्थो सर्वमोहनः ॥
अनुल्लंघ्यो महामायो - प्रद्युम्नो देवनायकः
प्राणेश्वरो जगद्बन्धुः - क्षेत्रज्ञ श्रीगणेश्वरः ॥
क्षरो दुरासदो ब्रह्म - प्रणवो विश्वसूत्रधृक्
सर्वानवन्द्यः प्रस्थेमः - सर्वधामो मनःपतिः ॥
आनन्द इश्रीधर इश्रीदः - प्राण स्सर्व नियोजकः
अनन्तलीला कर्तज्ञो - दुष्प्रापः कालचक्रकृत् ॥
आदिदेवो पराशक्तः - सर्वदेव स्सदोर्जितः
जगद्धरो जगज्जैत्रो - बाङ्मनः जगदार्तिहा ॥
शश्वच्छ्रीरसुराराति - र्मुकुन्दो मीन केतनः
विश्वशम्भु पिता मूल - प्रकृति स्सर्वमङ्गलः ॥
सृष्टिस्थित्यन्तकृच्छ्रेष्ठो - वैकुण्ठ स्सुजनाश्रयः
अनुत्तमः पुनर्जातिः - रुद्राद्युत्कृष्टचेतसः ॥
त्रैलोक्यपावन श्शुद्धपादो विश्वधुरन्धरः
महाब्रह्महिता यज्ञपुमान् स्तोत्रार्थ साधकः ॥
सर्वमोह स्सदापृष्ठ - स्सर्वदेव प्रियो विभुः
यज्ञत्राता जगत्सेतु - पुण्यो दुस्वप्ननाशनः ॥
सर्वदुष्टांतकृ त्साध्यो यज्ञेशो यज्ञभावनः
यज्ञभुग्यज्ञफलद स्सर्वश्रेयो द्विजप्रियः
वनमाली सदापूतः चतुर्मूर्ति स्सदार्चितः
मुञ्जकेश स्सर्वहेतो - वेदसार स्सदाप्रियः ॥
अनिर्देश्यवपु स्सर्वदेवमूर्ति श्चतुर्भुजः
अनन्तकीर्ति निस्सङ्ग स्सर्वदेवशिरोमणिः
परार्थकर्ता भगवान् - स्वार्थकृत्तपसानिधिः
वेदगुह्यो सदोदीर्णो - वृद्धिक्षय विवर्जितः

धर्मसेतु स्सदाशान्तो - विश्वरेता वृषाकपिः
ऋषी भक्तपराधीनो - पुराणो कुलदेवता ॥ ११२
मायावानर चारित्रो - पुण्य श्रवण कीर्तनः
उत्सवोऽनन्त माहात्म्यः - कृपालु धर्मजीवनः ॥ ११३
सहस्रनामो विजयो - नित्यतृप्त श्शुभद्रकः
असद्बाह्यो महोदारो - पावनो ग्रचोग्रवीक्षणः ११४
विश्वभोक्ता महावीरः - कीर्तनाद्भुतभोगवान्
त्रियुग श्शूलविध्वंसी - साधुसार स्सविक्रमः ॥ ११५
नारायणो लोकगुरुः - विष्वक्सेनो महाप्रभः
यज्ञसारो सुरस्तुत्यो - निर्मलो भक्तवत्सलः ॥ ११६
लोकैक नायक स्सर्वसज्जनापरिपालकः
मोक्षदोऽखिललोकेश - स्सदाध्येय स्त्रिविक्रमः ॥ ११७
मारुताऽवातो त्रिकालात्मा - नक्षत्रेश क्षुधापहा
शब्दब्रह्मा दयासार - कालचित्सर्वकर्तृकः ॥ ११८
अमोघास्त्र स्स्वयंव्यक्त - स्सर्वसत्त्वो सुखैकदृक्
सहस्रबाहु स्सुव्यक्तो - कालमृत्यु निवर्तकः ॥ ११९
अखिलाम्बोनिधिर्दान्त - स्सर्वविघ्नान्तको विभुः
महावराहो नृपतिः - दृष्टभृज्जैत्रमन्मथः ॥ १२०
अभिप्राय श्शुचिर्वीरो - सर्व मन्त्रैक रूपवान्
जनार्दनो महायोगी - गुरुपूज्यो महाभुजः ॥ १२१
भैरवाडम्बरो दण्डो - सर्वयन्त्रविदारणः
सर्वाद्भुतो महावीर्यो - करास स्सर्वदुःखहा ॥ १२२
अगर्वशस्त्रभृद्दिव्यो - स्मृत संकर्षणो प्रभुः
अकम्पनो महापूर्णो - शरणागत वत्सलः ॥ १२३
अगम्ययोद्भूतबल - स्सुलभो जय पर्ययः
अरिकोलाहलो वज्रधर स्सर्वाघ नाशनः ॥ १२४

धीरोधार स्सदापुण्यो - गुणो भद्रो गणेश्वरः
सर्वज्ञो पूर्वभाग्यो - शरणत्राण तत्परः ॥ १२५
पुण्योदयो पुराणज्ञो - स्मितवक्त्रो महाहरिः
मितभाषी व्रतधरो - महाज्वालो जगद्भयः ॥ १२६
ज्वालामुखो मृत्युमृत्युः - सर्वाशाज्योति भीषणः
श्रीमा न्विशो शतृघ्न - स्सर्वजूट स्त्रयोमयः १२७
महाकरालवदनो - सिंहभूतो महेश्वरः
अविद्या नाशकोऽव्यग्रो - भव्यो मन्त्राधिताह्वयः ॥ १२८
विद्याराजो जगत्स्रष्टा - सर्वयागीश्वरेश्वरः
वज्रायुधाधिकनखो - स्थिरो दुग्रंह सौम्यकृत् ॥ १२९
वेदात्मा दुर्गति त्राता - यज्ञाङ्ग स्मृति सागरः
देवदानव दुर्धर्षो - लीला व्याप्तो धरोधरः ॥ १३०
आदिपूर्वो महाश्रृङ्ग - श्शिवादार्योऽखिलेष्टदः
तपोमूर्ती जगद्वर्ती - सुब्रह्मण्यो विराजितः ॥ १३१
आत्मधारो मनुश्रेष्ठो - व्योमगम्य स्सदोन्नतः
मायानिधि विश्वजैत्रो - ज्ञानकोशपुरस्थितः ॥ १३२
शिष्टेष्ट स्सर्वगीर्वाण तेजो मोहनरूपकः
चक्रेश्वरोऽमिताचारो - योगानन्दो महाशिवः ॥ १३३
आधारनिलयो जह्नु र्वाचालोचित मृत्युहा
भक्तचिन्तामणि वीर - दर्पहा सर्वपूर्वकः ॥ १३
युगान्त स्सर्वरोगघ्न - स्सवदेवमयः पृथुः
ब्रह्मतेज स्सहस्राक्षो - विश्वश्लाघ्यो जगद्वशी ॥ १३
आदिविद्वान् सुसन्तोष - श्चक्रवर्ती महानिधिः
पूर्वो पूर्वजित्पूर्वो- पूर्वपूज्यो सर्वपूर्वकः ॥ १३
अद्वितीयो बहिःकर्ता - जगत्त्रय पवित्रकः
समस्तपातक ध्वंसी - ज्ञानमूर्तिः कृतान्तजित् ॥ १३

त्रिकाल जैत्रो जन्मादि - भंगवद्भक्ति वर्धनः
असाध्यो श्रीमयो ब्रह्मचारी मायाभयापहः ॥ १३८
भैरवेश श्चतुर्वर्णो - शितिकण्ठो यशप्रदः
अमोघवीर्यो वरदो - मासाग्निः कश्यपान्वयः ॥ १३९
रुद्रश्चण्डः पुराणोपि - मण्डनो व्याधिनाशकृत्
आद्यस्सनातन स्सिद्धः - सर्वश्रेष्ठा यशःपुमान् ॥ १४०
उपेन्द्रो वामनोत्साहो - मरीचिष्मान् विशोधनः
अनघ स्सात्वतां श्रेष्ठो - राज्यद स्सुगुणार्णवः ॥ १४१
आदिराजो वारुणीशो - एकदक्षो यशोनिधिः
सूर्यवंशध्वजो हर्षो - चतुरात्मा जगत्प्रियः ॥ १४२
बिशिष्टारुक्रमो मेधा - मनोवाक्काय दोषहा
आत्मवान्प्रथित स्सर्व - मद्ग्राह्योऽभयप्रदः ॥ १४३
भोगदोऽतीन्द्रिय स्सर्व - प्रकृष्टो धरणीजयः
विश्वभुक् ज्ञान विज्ञानो - भूषितो कर्दमात्मनः ॥ १४४
धर्माध्यक्षः कृताध्यक्षः - धर्मो धर्मधुरन्धरः
रत्नगर्भ श्चतुर्वेदो - परशीलोऽखिलार्तिहा ॥ १४५
दैत्यानांखण्डनो वीर - बाहु विश्व प्रकाशितः
देवहूतात्मजो भीमो - सत्यार्थोधिक साधकः ॥ १४६
आज्ञाधिपो दयांबोधि - र्महामोह तमिस्रहा
योगस्वामी सहस्रांघ्रि - ज्ञानयोगी सुधामयः ॥ १४७
विश्वसृड्जगतश्शास्ता - पीतकौपीनधारणः
अहीनभावः कपिलो - विश्वरेता अनाकुलः ॥ १४८
क्षीरांबुधि जगन्नाथः - प्रादुराशी स्सदस्पतिः
चतुर्युग स्सर्वशून्यो - स्वास्थ्यो भोक्ता महाप्रदः ॥ १४९
आश्रमात्मा गुरुश्रेष्ठौ - विश्वात्मा चित्ररूपिणः
एकाकी देवराडिन्द्र - श्रेष्ठः देवारिपूरुषः ॥ १५०

नराकृति विश्ववन्द्यो - महाकाम शिरोभुजः
अत्यन्तप्रलय स्थैर्यो - वाणियो दुष्टमोहनः ॥
धर्माङ्कितो देवदेवो - वेदार्थो श्रुति गोपनः
वेदान्तकर्ता दुष्टघ्नो - श्रीधन स्सुखितोनमः ॥
शौरी शुद्धोधन श्शक्र - स्सर्वोत्कृष्टजयध्वजः
धृतात्मा श्रुतिमार्गेशः - कर्तार स्सामवेदराट् ॥
मृत्युञ्जय स्सदाद्वेषी - क्रूरचण्डरसान्तरः
विद्याधरः पूर्वसिद्धो - धतृशिष्टः सुहृत्तमः ॥
श्रेष्ठो तिथेबहुश्शूरो - गन्धर्व कालसत्तमः
विद्वत्तमो विनाध्यास्ता - कामधेनु स्सुदर्शनः ॥
चिन्ताधृणिः कृपाचार्यो - वृक्षराट्कल्पपादपः
दिनपक्षो वसन्तर्तु - वत्सरः कल्पसंज्ञिकः ॥
आत्मतत्वाधिपो वीर - स्सत्व स्सत्यप्रवर्तकः
अध्यात्मविद्या ओंकार - स्सगुणात्माऽक्षरोत्तमः ॥
महाशनो महेष्वासः - सुप्रसाद श्शुचिश्रवाः
वर्णाधिको महामौली - मरीचिफलभुक् भृगुः ॥
दुर्गमो वासुकि र्वह्निः - मुकुन्दो जनकाग्रणिः
प्रतिज्ञासाधकोऽभेद्यः - सन्मार्ग स्सूक्ष्मगोचरः ॥
भर्तृ श्रेष्ठ श्चित्रधरो - गुहोऽराति प्रयातनः
संवर्तको दुराधर्षो - प्रत्ययो जगदादिजः ॥
दुर्मर्षणो बृहद्भानु - र्वरारोहो महाद्युतिः
सहस्रमूर्ध्नो भ्राजिष्णुः - भूतकृत्सर्वदर्शनः ॥
महाभोगो महाशक्ति - स्सर्वात्मा सर्वकेश्वरः
अप्रमेयस्सदादर्तो - विघ्नहर्ता प्रजाभवः ॥
चिरञ्जीवी सदामर्षी - दुर्लभ श्शोकनाशनः
जीवितात्मा महागर्ता - सुलभ स्सर्वविज्जयी ॥

कृतकर्मा विधेयात्मा – कृतज्ञ श्शमितोरिराट्
सर्गप्रवर्धन स्साधु - स्सहिष्णु निधिदो वसुः ॥　　१६४
भूरम्भोनिध योवाग्मी - ग्रामणी भूतकृद्यमः
सुभजस्तारणो हेतु - श्शिष्टेष्टः प्रीतिवर्धनः ॥　　१६५
कृतागमो वीरभयो - गुरुभृच्छर्वरीकरः
दृढसत्वो विवेकात्मा - लोकबन्धुः प्रभाकरः ॥　　१६६
सुषेणो लोकसारङ्गो - सुलभो द्रविणप्रदः
गभस्तिमद्दीप्तिमतो - दाशार्हं स्तन्तुवर्धनः ॥　　१६७
भूशयः पेशलोनर्थो - वैष्णवो वंशवर्धनः
विरामो दुर्जयो मानी - विश्वहासः पुरातनः ॥　　१६८
रौद्रः प्रग्रहो मूर्ति . श्शुभाङ्गो दुर्धरोत्तमः
वाचस्पति निवृत्तात्मा - क्षेमवृत्क्षमिणांवरः ॥　　१६९
महार्थस्सर्वतच्चक्षो - निग्रहानिर्गुणोऽधृतः
विस्तारमेधजोऽमेध्यो - बभ्रुस्वभावो बृंहणः ॥　　१७०
अयोनि जाचितो जीर्ण - सुमेधा स्वर्णवद्घृणिः
निर्वाणो गोपतिर्दक्षः - प्रियार्हो शान्ति विग्रहः ॥　　१७१
शब्दादिक स्सर्वसहा - सत्यमेधास्सुलोचनः
अनिर्वर्ति महाकर्मा - विवस्वतः प्रजागिरः ॥　　१७२
कुण्डली सत्पथाचार्य - परक्षिप्तो विरजोऽतुलः
दारुणो धुर्यनिर्वाणो - सदापूप प्रिय पटुः ॥　　१७३
मन्दगामी मन्दमति - मंदवानर शोभितः
वृक्षशाखाग्र सञ्चारी - देवसघैकसत्त्ववान् ॥　　१७४
सदाञ्जलिपुटो गुप्त - स्सर्वज्वर भयापहः
स्थावरः पेशलो लोकः - स्वामी त्रैलोक्य साधकः ॥　१७५
अत्याहारी निराहारी - शिखावान् मारुताशनः
अदृश्यप्राणिनिलयो - व्यक्तरूपो मनोजव ॥　　१७६

अभिप्रायोद्भवो दीक्षे - पापाद्विषभञ्जकः
महागम्भीर प्रियकृ - त्स्वामीतु दुरतिक्रमः ॥ १७७
आपदुद्धारको धुर्य - स्सर्वमङ्गल विग्रहः
सर्वपुण्याधिक फलो - सर्वमङ्गलदायकः ॥ १७८
श्रीमतश्श्रीहनुमतो - आञ्जनेयस्य पावनेः
दिव्य साहस्रनामाभ्यां - स्तोत्रं त्रैलोक्य पावनम् ॥ १७९
महारहस्यं भवतां - मध्येऽस्माकं यथाविधि
उक्तं लोके शुचि र्भूत्वा - भक्तियुक्तेन चेतसा ॥ १८०
एत न्महासहितायां - एत न्नामसहस्रकम्
स्तोत्र वा कवचं वापि - मन्त्रं वा यो नरस्तथा ॥ १८१
त्रिवर्षा नेकवर्षं वा - जपेत्षण्मास मेव वा ॥
स सर्वै र्मुच्यते पापैः - कल्पकोटि शतोद्भवैः ॥ १८२
भूर्जे वा पुस्तके वैव - लिखित्वा यः पुमान् शुचिः
मन्दवारेतु मध्याह्ने - पूजये द्भक्तिपूर्वकम् ॥ १८३
अपूपा नर्पये दाशु - सर्वान्कामा नवाप्नुयात्
इद यैर्लिखित यै श्च - श्रुतं यैः पठितं तथा ॥ १८४
यै श्च प्रख्यापितं तेषां - अष्टैश्वर्याणि सर्वशः
सर्वाण्यपि च पुण्यानि - सिध्यं त्यत्र न संशयः ॥ १८५
शृङ्खला बन्ध मुख्यानि - क्रूरग्रह भयानि च
क्षयापस्मार कुष्ठादि - महारोगानि यानि च ॥ १८६
एत त्सर्वं विहा याशु - गच्छन्तो सततं पुमान्
राजविद्वत्सभायां तु - उत्कर्षा भवति धृवम् ॥ १८७
कलहे जय माप्नोति - सन्तोषं भवति धृवम्
ब्रह्मराक्षस गन्धर्व - बेताल घृणि रेव च ॥ १८८
पूतनादि महाभूताः - पलायन्ते विदूरिताः
परेण कृत यन्त्राद्याः - शीघ्रं नश्यन्ति भूतले ॥ १८९

वशं भवति त्रैलोक्यं - मृगाणां मुखबन्धनम्
विद्यां बुद्धि श्रियं सौख्यं - भुक्ति मुक्ति च विंदति ॥
एत च्चरित्रं यत्रोर्व्यां - तिष्ठते तत्र भूतले
योजन द्वादशायाम - पर्यंत परिवेष्टितः ॥
सस्यानां परिमाणेन - सृष्टिर्भवति सर्वदा
चोराग्न्युदक सर्पादि - भयानि न भवन्ति च ॥
राजविड्वर दुर्भिक्षं - तद्देशे न कदाचन ॥
वृक्ष गुल्म लताद्या श्च - उत्कृष्टफल माप्नुयात् ॥
मनोहर मिदं सर्वं - दृष्यते येन केनचित्
ह्रासं च क्रियते तेन - सहसा भवति नाशनम् ॥
तस्य वित्तानि एतानि - फलानि विवधानि च
भवन्ति विपरीतानि - सर्वाण्यनुदिनं क्रमात् ॥
तस्मादिदं सचारित्रं - नित्यं सद्भक्तिपूर्वकम्
पठेन्ननुपठेन्नेति - घण्टा घोषण पूर्वकम्
वदामीदं निजमिदं - निजं शृण्वन्तु मौनयः ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे श्री वसिष्ठ महर्षि प्रोक्तं श्री हनुमद्गुण सहस्रनाम स्तोत्रं नाम सप्ताशीतितमः पटलः

* * *

# श्री पराशर संहिता

## *अष्टाशीतितमः पटलः*

—ः श्रीराम प्रोक्त मुख्य सहस्रनाम स्तोत्रम् ः—

श्री मैत्रेयः :

श्लो॥ दुःखसङ्गो निवृत्यर्थं - ब्रूहि मे करुणानिधे
भूयोऽपि कृपया ब्रह्मन् - किञ्चित्साधन मुत्तमम् ॥

अष्टाशीतितमः पटलः

श्री पराशरः :- ऋषयः ऊचुः :

श्लो।। ऋषे लोहगिरिं प्राप्तः सीता विरहकातरः
भगवन् किंविधा द्रामः - तत्सर्वं ब्रूहि - सत्वरम् ।।

वाल्मीकि रुवाच :-

श्लो।। मायामानुष देहोऽयं - ददर्शाग्रे कपीश्वरम्
हनुमन्तं जगत्स्वामि - बालार्कसम तेजसम् ।।
स सत्वरं समागम्य - साष्टांगं - प्रणिपत्य च
कृताञ्जलि पुटो भूत्वा - हनुमा न्राममब्रवीत् ।।

श्री हनुमा नुवाच :-

श्लो।। धन्योऽस्मि कृतकृत्योऽस्मि - दृष्ट्वा त्व त्पादपङ्क
योगिनाम प्यगम्यं च - संसारभय नाशनम्
पुरुषोत्तमं च देवेशं - कर्तव्यं त न्निवेद्यताम् ।।

श्री रामचन्द्र उवाच :-

श्लो।। जनस्थानं कपिश्रेष्ठ! - कोऽप्यागत्य विदेहजाम्
हृतवान् विप्रसंवेषो - मारीचानुगते मयि ।।

श्लो।। गवेष्य साम्प्रतं वीरः - जानकी हरणे नमः
त्वया गम्यो न को देश - स्त्वंच ज्ञानवतावर!
सप्तकोटि महामन्त्र - मन्त्रितावयवः प्रभुः ।।

ऋषयः :-

श्लो।। को मन्त्रः किञ्च तध्यानं - तन्नो ब्रूहि यथार्थता
कथा सुधारसं पीत्वा - तृप्यामः परंतप ।।

वाल्मीकिः :-

मन्त्रं हनुमतो विद्धि - भुक्तिमुक्ति प्रदायकम्
महारिष्ट महापाप - महादुःख निवारणम् ।।

मन्त्रम् :

ओं ऐं ह्रीं श्रीं हनुमते । रामदूताय । लङ्का विध्वंसनाय । अञ्ज गर्भ सम्भूताय । शाकिनी ढाकिनी विध्वंसनाय । किलिकिलि बू बू का विभीषणाय । हनुमद्देवाय । ओं ह्रीं श्रीं ह्रौं ह्रां हुं फट् स्वाहा ।

श्लो।। अन्यं हनुमतो मन्त्रं - सहस्रनाम संज्ञितम्
जानन्तु ऋषय स्सर्वे - महादुरितनाशनम् ।।
यस्य संस्मरणात् सीतां - लब्ध्वा राज्य मकण्टकम्
विभीषणाय च ददा - वात्मानं लब्धवा न्मया ।।
सहस्रनाम सन्मन्त्रं - दुःखाद्यौघ निवारणम्
वाल्मीके! ब्रूहि न स्तूर्ण - शुश्रूषामः कथांपराम् ।।

वाल्मीकि रुवाच :-

श्लो।। शृण्वन्तु ऋषय स्सर्वे - सहस्रनामकं स्तवम्
स्तवाना मुत्तमं दिव्यं - सदर्थस्य प्रदायकम् ।।

।। अस्यश्री हनुमत्सहस्रनामस्तोत्र मन्त्रस्य श्रीराम चन्द्रऋषि अनुष्टुप्छन्दः । श्री हनुमान् रुद्रो देवता । ह्रीं श्रीं ह्रूं बीजं । श्रीं इति शक्तिः । किलिकिल बू बू कारेण इति कीलकं लङ्काविध्वंसनेति कवचं । मम सर्वोपद्रव शान्त्यर्थे मम सर्वका सिध्यर्थे जपे विनियोगः ।। ऋष्यादिकं विन्यस्य ।। १

ओं ऐं हनुमते रामदूताय - अंगुष्ठाभ्यां नमः । लङ्का विध्वसनाय र्जनीभ्यां नमः । अञ्जनीगर्भ सम्भूताय - मध्यमाभ्यां नमः । शाकि किनी विध्वसनाय - अनामिकाभ्यां नमः । किलिकिलि बू बू कारे विभीषणाय हनुमद्देवाय - कनिष्ठिकाभ्यां नमः । ओं ह्रीं श्री ह्रौं फट् स्वाहा - करतल करपृष्ठाभ्यां नमः ।। ओं ऐं हनुमते रामदूता दयाय नमः । लङ्का विध्वंसनाय - शिरसि स्वाहा । अञ्जनीगर्भ सम्भूता शखायैवषट् । शाकिनी ढाकिनी विध्वसनाय कवचाय हुं । किलिकि बू कारेण विभीषणाय हुनुमद्देवताय - नेत्रत्रयाय वौषट् ।

ओं ह्रीं श्रीं ह्रौं हां हुं फट् स्वाहा - अस्त्राय फट् । भूर्भुव -
मिति दिग्बन्धः :-

ध्यानम् :

श्लो।। प्रतप्त स्वर्णवर्णाभं संरक्तारुण लोचनम्
सुग्रीवादि युतं ध्याये - त्पीताम्बर समावृतम् ।।
गोष्पदीकृतवारीशं - पुच्छ मस्तक मीश्वरम्
ज्ञानमुद्रां च बिभ्राणं - सर्वालङ्कार भूषितम् ।।

श्रीरामचन्द्र उवाच :-

## *श्री हनुमत् सहस्रनाम स्तोत्रम्*

श्लो।। हनुमान् श्रीप्रदो वायु - पुत्रो रुद्रोऽनघोऽजरः
अमृत्यु र्वीरवीर श्च - ग्रामवासो जनाश्रयः ।।
धनदो निर्गुणश्शूरो - वीरो निधिपतिर्मुनिः
पिङ्गाक्षो वरदो वाग्मी - सीताशोक विनाशकः ।।
शिवश्शर्वः परोऽव्यक्तो - व्यक्ताऽव्यक्तो धराधरः
पिङ्गकेशः पिङ्गरोमा - श्रुतिगम्य स्सनातनः ।।
अनादिर्भगवान् देवो - विश्व हेतुर्जनाश्रयः
आरोग्यकर्ता विश्वेशो - विश्वनाथो हरीश्वरः ।।
भर्गो रामो रामभक्तः - कल्याणः प्रकृतिस्थिरः
विश्वम्भरो विश्वमूर्ति - र्विश्वाकारश्च विश्वपः ।।
विश्वात्मा विश्वसेव्योथ - विश्वो विश्वहरो रविः
विश्वचेष्टो विश्वगम्यो - विश्वध्येयः कलाधरः ।।
प्लवङ्गमः कपिश्रेष्ठो - ज्येष्ठो विद्या वनेचरः
बालो वृद्धोयुवा तत्त्वं - तत्त्वगम्य स्सुखोह्यजः ।।
अञ्जनासूनु रव्यग्रो : ग्रामशान्तो धराधरः
भूर्भुवस्स्व र्महर्लोको - जनोलोक स्तपोऽव्ययः ।।

सत्यमोङ्कारगम्यश्च - प्रणवो व्यापकोऽमलः
शिवोधर्मप्रतिष्ठाता - रामेष्टः फल्गुनप्रियः ॥
गोष्पदीकृत वाराशिः - पूर्णकामो धरापतिः
रक्षोघ्नः पुण्डरीकाक्ष श्शरणागत वत्सलः ॥
जानकी प्राणदाता च - रक्षः प्राणापहारकः
पूर्णसत्व: पीतवासा - दिवाकर समप्रभः ॥
द्रोणहर्ता शक्तिनेता - शक्ति राक्षस मारकः
रक्षोघ्नो रामदूत श्च शाकिनी जीवहारकः ॥
भुभुवकारहताराति - गर्वः पर्वतभेदनः
हेतुमान् प्रांशुबीजं च - विश्वभर्ता जगद्गुरुः ॥
जगत्त्राता जगन्नाथो - जगदीशो जनेश्वरः
जगत्पिता हरिश्श्रीशो - गरुडस्मयभञ्जनः ॥
पार्थध्वजो वायुपुत्रोऽमित पुच्छोऽमितप्रभः
ब्रह्मपुच्छः परब्रह्म - पुच्छो रामेष्ट एवच ॥
सुग्रीवादियुतो ज्ञानी - वानरो वानरेश्वरः
कल्पस्थायी चिरञ्जीवी - प्रसन्न श्च सदाशिवः ॥
सन्मति स्सद्गति र्भुक्ति - मुक्तिदः कीर्तिदायकः
कीर्तिः कीर्तिप्रदश्शैव - समुद्र श्श्रीप्रद श्शिवः ॥
उदधिक्रमणो देव - स्संसार भयनाशनः
वार्धिबन्धनकृ द्विश्व - जेता विश्वप्रतिष्ठितः ॥
लङ्कारिः कालपुरुषो - लङ्केश गृहभञ्जनः
भूतावासो वासुदेवो - वसुस्त्रिभुवनेश्वरः ॥
श्रीरामदूतः कृष्ण श्च - लङ्काप्रासाद भञ्जनः
कृष्णः कृष्णस्तुत श्शान्त - श्शान्तिदो विश्वपावनः ॥
विश्वभोक्ता च मारीघ्नो - ब्रह्मचारी जितेन्द्रियः
ऊर्ध्वगोलांगुलीमाली - लाङ्गूल हतराक्षसः ॥

समीर तनुजो वीरो - वीरमारो जयप्रदः
जगन्मङ्गलदः पुण्यः - पुण्य श्रवण कीर्तनः ॥
पुण्यकीर्तिः पुण्यगतिः - जगत्पावन पावनः
देवेशो जितरोध श्च राम भक्ति विधायकः ॥
ध्याता ध्येयो भगस्साक्षी - चेतश्चैतन्य विग्रहः
ज्ञानदः प्राणदः प्राणो - जगत्प्राण स्समीरणः ॥
विभीषण प्रियश्शूरः - पिप्पलाश्रय सिद्धिदः
सुहृत्सिद्धाश्रयः कालः - कालभक्षक भंजितः ॥
लङ्केश निधनस्स्थायी - लङ्का दाहक ईश्वरः
चन्द्रसूर्याग्नि नेत्रश्च - कालाग्निः प्रलयान्तकः ॥
कपिलः कपीशः पुण्य - राशि द्वादशराशिगः
सर्वाश्रयोऽप्रमेयात्मा - रेवत्यादि निवारकः ॥
लक्ष्मण प्राण दाता च - सीताजीवन हेतुकः
रामध्येयो हृषीकेशो - विष्णुभक्तो जटी बली ॥
देवारिदर्पहा होता - कर्ताहर्ता जगत्प्रभुः
नगर ग्रामपालश्च - शुद्धो बुद्धो निरन्तरः ॥
निरञ्जनो निर्विकल्पो - गुणातीतो भयङ्करः
हनुमांश्च दुराराध्य स्तपस्साध्योऽमरेश्वरः ॥
जानकी घन शोकोत्थ - तापहर्ता परात्परः
वाङ्मयस्सदसद्रूप - कारणं प्रकृतेः परः ॥
भाग्यदो निर्मलो नेता - पुच्छलङ्काविदाहकः
पुच्छबद्धो यातुधानो - यातुधानरिपुप्रिय ॥
छायापहारी भूतेशो - लोकेश स्सद्गतिप्रदः
प्लवङ्गमेश्वरः क्रोधः - क्रोधः संरक्तलोचनः
क्रोधहर्ता तापहर्ता - भक्ताभयवर प्रदः

भक्तानुकम्पी विश्वेशः - पुरुहूतः पुरन्दरः ॥
अग्निर्विभावसुर्भास्वान् - यमो निरृतिरेवच
वरुणो वायुगतिमान् - वायुः कौबेर ईश्वरः ॥
रविश्चन्द्रः कुजस्सौम्यो - गुरुः काव्यः शनैश्चरः
राहुः केतुर्मरुद्धोता - धाता हर्ता समीरकः ॥
मशकीकृतदेवारिः - दैत्यारि र्मधुसूदनः
कामः कपिः कामपालः - कपिलो विश्वजीवनः ॥
भागीरीथी पदाम्भोज स्सेतुबन्ध विशारदः
स्वाहा स्वधा हविः कव्यं - हव्य कव्य प्रकाशकः ॥
स्वप्रकाशो महावीरो - लघुश्चामित विक्रमः
प्रडीनोड्डीनगतिमान् - सद्गतिः पुरुषोत्तमः ॥
जगदात्मा जगद्योनि - र्जगदन्तो ह्यनन्तकः
विपाप्मानिष्कलङ्कश्च - महान् महदहंकृतिः ॥
खं वायुः पृथिवी - ह्यापो मह्निर्दिक्काल एवच,
क्षेत्रज्ञः क्षेत्रपालश्च - पल्वली कृतसागरः ॥
हिरण्मयः पुराणश्च - खेचरो भूचरोमनुः
हिरण्यगर्भस्सूत्रात्मा - राजराजो विशांपतिः ॥
वेदान्तवेद्योद्गीथश्च - वेदवेदाङ्ग पारगः
प्रतिग्रामस्थितः स्साध्य - स्फूर्तिदाता गुणाकरः ॥
नक्षत्रमाली भूता मा - सुरभिः कल्पपादपः
चिन्तामणि र्गुणनिधिः - प्रजापतिरनुत्तमः ॥
पुण्यश्लोकः पुरारोति - ज्योतिष्मान् शार्वरीपतिः
किलिकिल्यारवत्रस्त - भूत प्रेत पिशाचकः ॥
ऋणत्रय हरस्सूक्ष्म - स्स्थूल स्सर्वगतः पुमान्
अपस्मार हरस्स्मर्ता - श्रुतिर्गाथास्मृतिर्मनुः ॥
स्वर्गद्वारः प्रजाद्वारो - मोक्षद्वार कपीश्वरः
नादरूपः परब्रह्म - ब्रह्मब्रह्मा पुरातनः ॥

एकोनैको जनश्शुक्ल - स्स्वयं ज्योति रनाकुलः
ज्योति र्ज्योतिरनादिश्च - सात्त्विको राजसत्तमः ॥
तमोहर्ता निरालम्बो - निराकारो गुणाकरः
गुणाश्रयो गुणमयो - बृहत्कायो बृहद्यशाः ॥
बृहद्धनु र्बृहत्पादो - बृहन्मूर्धा बृहत्स्तवः
बृहत्कर्णो बृहन्नासो - बृह न्नेत्रो बृहद्गलः ॥
बृहद्यत्नो बृहच्चेष्टो - बृहत्पुच्छो बृह त्करः
बृहद्गति र्बृहत्सेव्यो - बृहल्लोक फलप्रदः ॥
बृहच्छक्ति र्बृहद्वाञ्छा - फलदो बृहदीश्वरः
बृहल्लोकनुतो द्रष्टा - विद्यादाता जगद्गुरुः ॥
देवाचार्यस्सत्यवादी - ब्रह्मवादी कलाधरः
सप्तपातालगामीच - मलयाचल संश्रयः ॥
उत्तराशास्थितश्श्रीदो - दिव्यौषधवशङ्खगः
शाखामृगः कपीन्द्रश्च - पुराण श्श्रुति सञ्चरः ॥
चतुरो ब्राह्मणो योगी - योगगम्यः परात्परः
अनादि निधनो व्यासो - वैकुण्ठः पृथिवीपतिः ॥
पराजितो जिताराति - स्सदानन्दश्च ईशिता
गोपालो गोपति र्गोप्ता - कलिः कालः परात्परः ॥
मनोवेगी सदायोगी - संसारभय नाशनः
तत्त्वदाताच तत्त्वज्ञ - स्तत्त्व तत्त्व प्रकाशकः ॥
शुद्धो बुद्धो नित्यमुक्तो - युक्ताकारो जयप्रदः
प्रलयोऽमितमायश्च - मायातीतो विमत्सरः ॥
मायानिर्जितरक्षश्च - मायानिर्मित विष्टपः
मायाश्रयश्च निर्लेपो - मायानिर्वञ्चकस्सुख ॥
सुखी सुखप्रदो नागो - महेशकृत संस्तवः
महेश्वरस्सत्य सन्ध - श्शरभः कलिपावनः ॥

रसो रसज्ञस्सम्मानस्तपश्च क्षुश्रभैरवः
घ्राणो गन्धस्स्पर्शनं च - स्पर्शोऽहङ्कारमानदः ॥
नेतिनेतीति गम्यश्च वैकुण्ठ भजनप्रियः
गिरीशो गिरिजा कान्तो - दुर्वासाः कविरङ्गिराः ॥
भृगुर्वसिष्ठश्च्यवन - स्तुम्बुरुर्नारदोऽमलः
विश्वक्षेत्रं विश्वबीजं - विश्वनेत्र श्च विश्वपः ॥
याजको यजमानश्च - पावकः पितरस्तथा
श्रद्धाबुद्धि क्षमा तन्द्रा - मन्त्रो मन्त्रयुत स्स्वरः ॥
राजेन्द्रो भूपतिः कण्ठमाली संसारसारथिः
नित्यस्सपूर्ण कामश्च - भक्त कामधुगुत्तमः ॥
गुणपः कीशपो भ्राता - पिता माता च मारुतिः
सहस्रशीर्षा पुरुषः - सहस्राक्षस्सहस्रपात् ॥
कामजित्कामदहनः - कामः काम्यफलप्रदः
मन्द्राहारी च रक्षोघ्नः - क्षिति भारहरो बलः
नखदंष्ट्रायुधो विष्णु - भक्तोऽभयवरप्रदः
दर्पहा दर्पदोदृप्त - श्शतमूर्ति रमूर्तिमान् ॥
महानिधि र्महा भागो - महाभोगो महार्थदः
महाकारो महायोगी - महातेजा महाद्युतिः
महाकर्मा महानादो - महामन्त्रो महामतिः
महाशयो महोदारो - महादेवात्मको विभुः ॥
रुद्रकर्मा क्रूरकर्मा - रत्ननाभःकृतागमः
अम्भोधिलङ्घन स्सिद्धो - नित्यो धर्म प्रमोदनः
जितामित्रो जयस्सामो - विजयो वायुवाहनः
जीव दाता सहस्रांशु - र्मुकुन्दो भूरिदक्षिणः ॥
सिद्धार्थ स्सिद्धिद स्सिद्ध संकल्प सिद्धिहेतुक
सप्तपाताल चरण - स्सप्तर्षि गणवन्दितः ॥

सप्ताब्धिलङ्घनो वीर - स्सप्तद्वीपोरुमण्डलः
सप्ताङ्गराज्य सुखद - स्सप्तमातृनिषेवितः ॥ ९१
सप्तलोकैक मकुट - स्सप्त होता स्वराश्रयः
सप्तच्छन्दोनिधि स्सप्त - च्छन्द स्सप्तजनाश्रयः ॥ ९२
सप्तसामोप गीतश्च - सप्तपाताल संश्रयः
मेधावी कीर्तिद श्शोकहारी दौर्भाग्य नाशनः ॥ ९३
सर्ववश्यकरो भर्गो - दोषघ्नः पुत्रपौत्रदः
प्रतिवादि मुखस्तम्भो - दुष्ट चित्तप्रसादनः ॥ ९४
पराभिचारशमनो - दुःखघ्नो बन्धमोक्षदः
नवद्वार पुराधारो - नवद्वार निकेतनः ॥ ९५
नरनारायण स्तुत्यो - नरनाथो महेश्वरः
मेखली कवची खड्गी - भ्राजिष्णु विष्णु सारथिः ॥ ९६
बहुयोजन विस्तीर्ण - पुच्छः पुच्छहतासुरः
दुष्टग्रह निहन्ता च पिशाच ग्रह घातुकः ॥ ९७
बालग्रह विनाशी च - धर्मोनेता कृपाकरः
उग्रकृत्योग्रवेगश्च - उग्रनेत्र श्शतक्रतुः ॥ ९८
शतमन्यु स्तुत स्तुत्य - स्स्तुति स्स्तोता महाबलः
समग्रगुणशाली च - व्यग्रोरक्षो विनाशकः ॥ ९९
रक्षोघ्न हस्तो ब्रह्मेश - श्श्रीधरो भक्तवत्सलः
मेघनाथो मेघरूपो - मेघवृष्टि निवारकः ॥ १००
मेघ जीवत हेतुश्च - मेघश्यामः परात्मकः
समीर तनयो बोद्धा - तत्त्वविद्या विशारदः ॥ १०१
अमोघोऽमोघवृद्धिश्च - इष्टदोऽनिष्टनाषकः
अर्थोऽनर्थापहारी च - समर्थो राम सेवकः ॥ १०२
अर्थी धन्य स्सुराराति: - पुण्डरीकाक्ष आत्मभूः
सङ्कर्षणो विशुद्धात्मा - विद्याराशि स्सुरेश्वरः ॥ १०३

अबलोद्धारको नित्य - स्सेतुकृद्रामसारथिः
आनन्द परमानन्दो - मत्स्यः कूर्मो निधिश्शमः ॥ १०४
वराहो नारसिंहश्च - वामनो जगदग्निजः
रामः कृष्ण श्शिवो बुद्धः - कल्की रामाश्रयो हरः ॥ १०५
नन्दी भृङ्गी च चण्डी च - गणेशो गणसेवितः
कर्माध्यक्ष स्सुराध्यक्षो - विश्रमो जगतां पतिः ॥ १०६
जगन्नाथः कपिश्रेष्ठ - स्सर्वावास स्सदाश्रयः
सुग्रीवादि स्तुतश्शान्त - स्सर्वकर्मा प्लवङ्गमः ॥ १०७
नखदारित रक्षश्च - नखायुध विशारदः
कुशल स्सुधन श्शेषो - वासुकि स्तक्षक स्स्वरः ॥ १०८
स्वर्णवर्णो बलाढ्यश्च - रामपूज्योऽघनाशनः
कैवल्यदीपः कैवल्यो - गरुडः पन्नगो गुरुः ॥ १०९
किल्यारावहतारातिः - गर्वः पर्वतभेदनः
वज्राङ्गो वज्रवेगश्च - भक्तो वज्र निवारकः ॥ ११०
नखायुधो मणिग्रीवो - ज्वालामाली च भास्करः
प्रौढ प्रताप स्तपनो - भक्ततापनिवारकः ॥ १११
शरणं जीवनं भोक्ता - नानाचेष्टो ह्यचञ्चलः
सुस्वस्थोऽष्टास्यहा - दुःखशमनः पवनात्मजः ॥ ११२
पावनः पवनः कान्तो - भक्तागस्सहनोबलः
मेघनाद रिपुर्मेघ - नादसंहृत राक्षसः ॥ ११३
क्षरोऽक्षरो विनीतात्मा - वानरेशस्सतांगतिः
श्रीकण्ठश्शितिकण्ठश्च - सहायस्सहनायकः ॥ ११४
अस्थूलस्त्वनणुर्भर्गो - देवस्संहृति नाशनः
अध्यात्म विद्यासारश्च - अध्यात्म कुशलस्सुधीः ॥ ११५
अकल्मष स्सत्यहेतु - स्सत्यगस्सत्य गोचरः
सत्यगर्भ स्सत्यरूप - स्सत्यः सत्य पराक्रमः ॥ ११६

अञ्जना प्राणलिङ्गश्च - वायुवंशोद्भव स्सुधीः
भद्ररूपो रुद्ररूप - स्सुरूप श्चित्ररूपधृत् ॥
मैनाकवन्दित सूक्ष्म दर्शनो विजयो जयः
क्रान्त दिङ्मण्डलो रुद्रः - प्रकटीकृत विक्रमः ॥
कम्बुकण्ठः प्रसन्नात्मा - ह्रस्वनासो वृकोदरः
लम्बोष्ठः कुण्डली चित्रमाली योगविदां वरः ॥
विपश्चित्कविरानन्द विग्रहोऽनन्य शासनः
फल्गुनीसूनु रव्यग्रो - योगात्मा योग तत्परः ॥
योगवेद्यो योगवक्तो - योगयोनिर्दिगम्बरः
अकारादि क्षकारांत - वर्ण निर्मित विग्रहः ॥
उलूखल मुखस्सिंह - स्संस्तुतः परमेश्वरः
श्लिष्टजङ्घ श्लिष्टजानु - श्लिष्टपाणि शिखाधरः ॥
सुशर्माऽमितशर्मा च नारायण परायणः
जिष्णुर्भविष्णू रोचिष्णु - र्ग्रसिष्णु स्स्थाणु रेवच ।
हरिरुद्रानुकृद्वृक्षकम्पनो भूमि कम्पनः
गुणप्रवाहसूत्रात्मा - वीतरागस्तुति प्रियः ॥
नागकन्या भयध्वंसी - रुक्मवर्णः कपालभृत्
अनाकुलो भवोपायोऽनपायो वेदपारगः ॥
अक्षरः पुरुषो लोक नाथो रक्षः प्रभुर्धृढः
अष्टाङ्गयोग फलभुक् सत्य सन्धः पुरुष्टुतः ॥
श्मशानस्थान निलयः प्रेत विद्रावणक्षमः
पञ्चाक्षर परः पञ्च मातृको रञ्जन ध्वजः ॥
योगिनी बृन्द वन्द्यश्च - शत्रुघ्नोऽनन्त विक्रमः
ब्रह्मचारीन्द्रिय रिपु धृंतदण्डो दशात्मकः ॥
अप्रपञ्च स्सदाचार - श्शूरसेन विदारकः
वृद्धप्रमोदश्चानन्द - स्सप्त जिह्वापतिर्धरः ॥

नवद्वार पुराधारः - प्रत्यगस्साम गायकः
षट्चक्रधामा स्वर्लोको - भयहृन्मानदोऽमदः ॥ ११०
सर्व वश्यकरश्शक्ति - र्नेताचानन्त मङ्गलः
अष्टमूर्ति धरोनेता - विरूपस्स्वर सुन्दरः ॥ १३१
धूमकेतु र्महाकेतु - स्सत्यकेतु र्महारथः
नन्दिप्रियः स्वतन्त्रश्च - मेखली समर प्रियः ॥ १३२
लोहाङ्गः सर्वविद्धन्वी - षट्कलश्शर्व ईश्वरः
फलभुक्फलहस्तश्च - सर्वकर्म फलप्रदः ॥ १३३
धर्माध्यक्षो धर्मफलो - धर्मोधर्म प्रदोऽर्थदः
पञ्चविंशति तत्वज्ञ - स्तारक ब्रह्मतत्परः ॥ १३४
त्रिमार्गवसतिर्भीमः - सर्वदुःखनिबर्हणः
ऊर्जस्वान् निर्गलश्शूली - माली गर्भोनिशाचरः ॥ १३५
रक्ताम्बरधरो रक्तो - रक्तमाला विभूषणः
वनमाली शुभाङ्गश्च - श्वेतः श्वेताम्बरो युवा ॥ १३६
जयो जयपरीवारः - सहस्रवदनः कविः
शाकिनी डाकिनी यक्ष रक्षो भूतौघ भञ्जनः ॥ १३७
सद्योजातः कामगति - र्ज्ञानमूर्ति र्यशस्करः
शम्भुतेजाः सार्वभौमो - विष्णुभक्तः प्लवङ्गमः ॥ १३८
चतुर्नवति मन्त्रज्ञः - पौलस्त्य बलदर्पहा
सर्वलक्ष्मी प्रदश्श्रीमानङ्गद प्रिय ईडितः ॥ १३९
स्मृतिर्बीज सुरेशानः - संसार भय नाशनः
उत्तमश्श्रीपरीवार - श्श्रीभूदुर्गा च कामदृक् ॥ १४०
सदागतिर्मातरिश्वा - रामपादाब्ज षट्पदः
नीलप्रियो नीलवर्णो - नीलवर्ण प्रियस्सुहृत् ॥ १४१
रामदूतो लोकबन्धु - रन्तरात्मा मनोरमः
श्रीराम ध्यानकृद्वीर - स्सदाकिंपुरुषस्तुतः ॥ १४२

रामकार्यांतरङ्गश्च - शुद्धिर्गति रनामयः
पुण्यश्लोकः परानन्दः - परेशः प्रियसारथिः ॥
लोकस्वामी मुक्तिदाता - सर्वकारण कारणः
महाबलो महावीरः - पारावार गतिर्गुरुः ॥
समस्त लोलसाक्षी च - समस्त सुरवन्दितः
सीतासमेत श्रीराम पाद सेवाधुरन्धरः ॥

श्री सीतासमेत श्रीरामपाद सेवाधुरन्धरः
श्री आञ्जनेय सहस्रनामश्लोका स्समाप्ताः

वाल्मीकि रुवाच :-

श्लो॥ इति नाम्नां सहस्रेण - स्तुतो रामेण वायुभूः
उवाच तं प्रसन्नात्मा - सन्धा यात्मान मव्ययम् ॥

श्री हनुमा नुवाच :-

श्लो॥ ध्यानास्पद मिदं ब्रह्म - मत्पुर स्समुपस्थितम्
स्वामिन् कृपानिधे! राम! - ज्ञातोऽसि कपिना मया।
त्वध्यान निरता लोकाः - किं मां जपसि सादरम्
त आगमनहेतु श्च - ज्ञातो ह्यत्र मयानघ ॥
कर्तव्यं मम किं राम - तथा ब्रूहि च राघव
इति प्रचोदितो रामः - प्रहृष्टा त्मेद मब्रवीत् ॥

श्री रामः :-

श्लो॥ दुर्जयः खलु वैदेहीं - गृहीत्वा कोऽपि निर्गतः
हत्वा तं निर्घृणं वीर! - आनयस्व कपीश्वर ॥
मम दास्यं कुरु सखे! - भव! विश्वसुखकर!
तथाकृते त्वया वीर! - मम कार्यं भविष्यति ॥

ओ मित्याज्ञां तु शिरसा - गृहीत्वा च कपीश्वर:
विधेयं विधित्तत्र - चकार स शिव स्स्वयम् ॥

इदं नाम्नां सहस्रं तु - योऽधीते प्रत्यहं नरः
दुःखौघो नश्यते तस्य - सम्पत्ति र्वर्धते चिरम् ॥

वश्यं चतुर्विधं तस्य - भवत्येन न संशयः
राजानो राजपुत्रा श्च - राजकार्या श्च मन्त्रिणः
त्रिकालपठना दस्य - दृश्यन्तेऽत्र त्रिपक्षतः ॥
अश्वत्थमूले जपतां - नास्ति वैरिकृतं भयम्
त्रिकाल पठनात्तस्य - सिद्धि स्स्या त्करसंस्थिता ॥

ब्राह्मीमुहूर्ते चोत्थाथ - प्रत्यहं यह पठे न्नरः
ऐहिकामुष्मिकं सोऽपि - लभते नात्र संशयः ॥
संग्रामे सन्निविष्टानां - वैरिविद्रावणं परम्
ज्वरापस्मार शमनं - गुल्मादीनां निवारणम् ॥

साम्राज्य सुख सम्पत्ति - दायकं जगतां श्रुणु
स्वर्गं मोक्षं समाप्नोति - रामचन्द्र प्रसादतः ॥

य इदं पठते नित्यं - श्रावये द्वा समाहितः
सर्वा त्कामा नवाप्नोति - वायुपुत्र प्रसादतः ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री रामप्रोक्त मुख्य सहस्रनाम स्तोत्रं नाम
अष्टाशीतितमः पटलः

## श्री पराशर संहिता

### एकोननवतितमः पटलः

अनुपलब्धः

# श्री पराशर संहिता

## नवतितमः पटलः

-: रोग कृत्रिम भूतोच्चाटन मालामन्त्र कथनम् :-

त्रेयः :

पराशर महायोगिन् - सर्वमन्त्र प्रवर्तक!
भूत प्रेत पिशाचाना - मुच्चाटनविधिं वद । 1

राशरः :

रोगकृत्रिमभूताना - मुच्चाटनविधिं प्रभो
वक्ष्यामि मुनिशार्दूल! - सावधानमना श्शृणु ॥ 2

शौनकेन पुरा प्रोक्तं - विधातुः परमेष्टिनः
सर्वलोक हितार्थाय - मन्त्राणा मुत्तमोत्तमम् ॥ 3

अस्य श्री रोगकृत्रिम भूतोच्चाटन मन्त्रस्य शौनक ऋषिः । जगती छन्दः । श्री हनुमान् देवता । हुं बीजं । फट् शक्तिः । मां कीलकं मम श्री हनुमत्प्रसाद सिध्यर्थे जपे विनियोगः । मूल मन्त्रेण कर-शुद्धिं कृत्वा

ओं भूः नमोभगवते प्रतापहनुमते अंगुष्ठाभ्यां नमः। ओं भुवः नमो भगवते प्रचण्ड हनुमते तर्जनीभ्यां नमः। ओं सुवः नमो भगवते क्रोधोद्भव हनुमते मध्यमाभ्यां नमः। ओं महः नमो भगवते आवेश हनुमते अनामिकाभ्यां नमः। ओं जनः नमो भगवते उच्चाटन हनुमते कनिष्ठकाभ्यां नम. ओं तपः ओं सत्यं नमो भगवते श्री रामदूत हनुमते करतलकर पृष्ठाभ्यां नमः।

[एव हृदयादि न्यासः।]

: -

ध्याये द्बालदिवाकर द्युति निभं देवारि दर्पापहम्
देवेन्द्रप्रमुखैः प्रशस्त यशसं देदीप्यमानं रुचा

सुग्रीवादि समस्त वानरयुतं सुव्यक्त तत्वप्रियम्
संरक्तारुणलोचनं पवनजं पीताम्बरालंकृतम् ॥ !

दिग्बन्धन विधानं ।–

पूर्व दिग्भागे अष्टकोटि शाकिनी सहित भीमको नाम राक्षसा॰ मां रक्षरक्ष स्वाहा ॥

दक्षिणदिग्भागे अष्टकोटि डाकिनी सहित शकटो नाम राक्षसा॰ मां रक्षरक्ष स्वाहा ॥

पश्चिमदिग्भागे नवकोटि भेतालसहित कर्कशोनाम राक्षसाय म रक्षरक्ष स्वाहा ॥

उत्तरदिग्भागे नवकोटि ब्रह्मराक्षस शाकिनी डाकिनी बेतालोच्चाट नाय राक्षसाय मां रक्षरक्ष स्वाहा ॥

इन्द्रमण्डले गजारूढहनुमते वज्रशक्ति सहिताय चोर व्याघ्र पिशा-चोरग ब्रह्मराक्षस शाकिनी डाकिनी बेतालोच्चाटनाय उच्चाटनाय मां रक्षरक्ष। ओं यं लं ओं नमो भगवते हुं फट् स्वाहा मां रक्षरक्ष स्वाहा ॥

अग्निमण्डले मेषारूढहनुमते शक्तिसहिताय चोर व्याघ्र पिशा चोरग ब्रह्मराक्षस शाकिनी डाकिनी वेतालोच्चाटनोच्चाटनाय मां रक्षरक्ष ओं यं रं लं ओं नमो भगवते हुं फट् स्वाहा मां रक्षरक्ष स्वाहा ॥

यमभण्डले महिषारूढहनुमते उद्दण्डशक्ति सहिताय चोरव्याघ्र पिशा-चोरग ब्रह्मराक्षस शाकिनी डाकिनी बेतालोच्चाटनोच्चाटनाय माँ रक्षर क्षओं यं रं ल ओं नमो भगवते हुं फट् स्वाहा मां रक्षरक्ष।

निर्ऋति मण्डले मानुषारूढहनुमते खड्गशक्ति सहिताय चोर··· ···(पूर्ववत्)······ओं यं रं ल व ओं नमो भगवते हुं फट् स्वाहा मां रक्षरक्ष।

वरुणमण्डले मकरारूढ हनुमते पाशशक्ति सहिनाय ··············
ओं यं रं ल वं शं ..... ....

वायुमण्डले कुरङ्गमृगारूढ़ हनुमते अंकुशशक्ति सहिताय....
ओं यं रं लं वं शं षं...........

अथ कुवेरमण्डले तुरगारूढ हनुमते गदाशक्ति सहिताय........ओं
रं लं वं शं षं सं ....

ईशान्यमण्डले वृषभारूढ हनुमते त्रिशूलशक्ति सहिताय......अं
रं लं वं शं ष स हं ......

अथ भूमण्डले वृश्चिकारूढ हनुमते वज्रपाशशक्ति सहिताय .....

. अन्तरिक्षमण्डले वर्तुल वायुव्य वृषभारूढ हनुमते मुद्गर तो
सहिताय ... ओं य र लं वं श प सं हं ल.......

. अथ ब्रह्ममण्डले हंसारूढ हनुमते पद्मशक्ति सहिताय.....ओं र
लं वं श प सं हं ल क्षं ठं ओं नमो भगवते हुं फट् स्वाहा
रक्षरक्ष ॥

ओं ह्रां यं खें खें वीरप्रचण्ड प्रताप हनुमते हुं खें । गतिबन
ाबंध । मार्गबंध । सर्वबंध । वृश्चिकान् बध । चौरान् बध । व्याघ्र
। गजान् बध । शरभान् बंध । नानाविध दुष्टमृगान् बंध । ग
ण्डान् बध । भूतान् बंध । प्रेतान् बंध । पिशाचान् बध । ज्वरान् ब
शूलान बंध । सर्वदेवतान् बंध । राज्ञ बन्ध । राजसमूहान् बन्ध। 
दिनः बंध । परमन्त्रयन्त्र तन्त्रान् बन्ध। सर्वशत्रून् बन्ध। सर्वदे
श यावेशय । भो वीर प्रताप रौद्र भीषण हनुमान् वज्रदेहाय । दश
नाय । रत्नकुण्डल कौपीन तुलसीवनमाला धराय । सर्वग्रहोच्चाटना
लसभूहोच्चाटनाय ।चोर शत्रु। समूहयो रुच्चाटनाय । अण्डज बुदबु
द्भयो रुच्चाटनाया मां रक्षरक्ष ओं य ओं नमो भगवते हुं फट् स्वाह
मनुः :-

ओं नमो भगवते वीर हनुमते दिव्यपीताम्बरालंकृताय । कनकभ्
रणालकृताय । किरीट तुलसीवनमाला विभूषिताय । कनकयज्ञोप
ीन कटिसूत्र विराजिताय श्रीरामचन्द्र मनोभिलाषाय । लङ्कापुरी द

कारणाय। दानवकुलगिरि वज्रदण्डाय। अक्षयकुमार संहारः ओं रं यं ओं नमोभगवते श्री रामदूताय ओं यं ओं नमो भगवते स्वाहा ॥

श्लो॥ रोग कृत्रिमभूताना - मुच्चाटनकृता मनोः
सप्त चत्वारिंशोत्तर - शतसंख्याक्षरावलेः ॥
अयं तु हनुमन्मन्त्रः - जपतां शीघ्रसिद्धिदः
अस्य यन्त्रं प्रवक्ष्यामि - शृणुष्व मुनिपुङ्गव ! ॥
त्र्यस्र षडस्रं वृत्तं च - तद्बाह्ये च दलाष्टकम्
भूबिबत्रय युक्ता च - चतुर्द्वारोपशोभितम्
इद लेख्यं श्रिय श्चक्रं - तथा पुष्पांजलिं क्षिपेत् ॥
राज्यप्रदं हनूमंतं - वदान्यं मधुरप्रियम्
श्रीयं चिंतामणिं कामधेनु कल्पकमाश्रये ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
रोग कृत्रिमभूतोच्चाटन मालामंत्र कथनं नाम
नवतितमः पटलः

* * *

# श्री पराशर संहिता

## एकनवतितमः पटलः

-: उद्दण्ड हनुमन्मन्त्र प्रभाव कथनम् :-

श्री पराशर :

श्लो॥ मन्त्रान्तरं प्रवक्ष्यामि - शृणुष्व मुनिपुङ्गव
सर्वलोक हितार्थाय - सावधानमना श्शृणु ॥
उद्दण्ड हनुमन्मन्त्रं - सर्वलोकेषु विश्रुतम्
सिध्यन्ति सर्वकार्याणि - यस्य स्मरणवैभवात् ॥

अस्य श्री उद्दंड हनुमन्मंत्रस्य कालाग्नि रुद्र ऋषिः। नाना छन्दांसि उद्दण्ड हनुमान् देवता। ओं बीजं। स्वाहा शक्तिः। श्रीं कीलकं मम उद्दण्ड हनुमत्प्रसाद सिध्यर्थे जपे विनियोगः। ओं अञ्जना सुताय अंगुष्ठाभ्यां नमः। रुद्रमूर्तये तर्जनीभ्यां नमः। वायुपुत्राय मध्यमाभ्या नमः। अग्निगर्भाय अनामिकाभ्यां नमः। श्रीराम दूताय कनिष्ठिकाभ्यां नमः। ब्रह्मास्त्र निवारणाय करतलकर पृष्ठाभ्यांनमः।

[एवं हृदयादि न्यासः।]

म् :–

॥ दोर्दण्ड सृष्ट घण्टारव दलित महादैत्य गर्वान्धकारं
दंष्ट्राभ्रष्टांशुजाल द्विपण शशिरथि कोटिसूर्यप्रकाशम्
नक्षत्रस्पर्धि शुम्भत्कटितल विलसत्किंकिणीजालनादम्
उद्दण्डश्रीहनूम द्विभु मनिश महं मानसे चिन्तयामि ॥ १

आदौ प्रणव मुच्चार्य - श्रीबीजं तदनन्तरम्
कोलाहल पदं ब्रूया - दुद्दण्ड हनुमत्पदम् ॥ २

मम शत्रुपदं चोक्त्वा - संहारपद मुच्चरेत्
सर्वकार्याणि शब्दं च - साधयेति द्वि रुच्चरेत् ॥ ३

वह्निजायां समुच्चार्य - त्रिंशद्वर्णो ह्ययं मनुः
लक्ष मेकं पुरश्चर्या - दशांशं तर्पणं बुधः ४

दद्दशांशं हुने त्पश्चा - त्परमान्नं घृतान्वितम्
ब्राह्मणान्भोजये त्पश्चा - द्दशांशं विधिना मुने ॥ ५

एवं यः कुरुते योगी - तस्य सिद्धिर्भवे द्ध्रुवम्
अत्रै वोदाहरिष्यामि - इतिहासं पुरातनम् ॥ ६

भीमसेनः पृथो पुत्रो - महाबलपराक्रमः
उद्दण्ड हनुमन्मन्त्र - प्रसादात्सिद्धि माप्तवान् ॥

जित्वा शत्रून् रणे शूरः - लेभे राज्य मकण्टकम्
अन्येच बहवो भूपाः - ह्येते मन्त्रप्रसादतः
स्वय मुद्दण्डविधिना - प्राप्ता स्सर्वे महीमिमाम् ॥

मान्धाता कार्तवीर्यश्च - विश्वामित्रो महामुनिः
उद्दण्ड हनुमन्मन्त्र - प्रभावात्सिद्धिमागताः ॥

तदा प्रभृति भूलोके - ह्युद्दण्डाख्यो मनु स्मृतः
उद्दण्डवृत्तिकामो हि - पठेदेत न्मनुं बुधः ॥

सहस्राश्व रथारूढं - सहस्रं वनितायुतम्
सन्तोषं देहि मे नित्यं - उद्दण्डहनुमन्नमः ॥

मार्ताण्डं भक्षयामास - फलभावेन यः पुरा
तस्मै हनुमते नित्यं - उद्दण्डाय नमोनमः ॥

सहस्र कांता सहितं - सर्वब्रह्माण्ड नायकम्
हनूमन्त महं वन्दे - भक्तपालन तत्परम् ॥

कोलाहलोद्दण्डसुबाहुदण्डो
मार्ताण्डकोटि स्फुट चण्डतेजः
गाण्डीवि चिह्नीकृत केतुदण्डो
ब्रह्माण्ड मध्याद्धनुमान् प्रचण्डः ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
उद्दन्ड हनुमन्मंत्र प्रभाव कथनं नाम
एकनवतितमः पटलः

# श्री पराशर संहिता

## द्विनवतितमः पटलः

### -: श्री हनुमत् स्तवराजः :-

श्री पराशरः :-

श्लो॥ अन्यत्स्तोत्रं प्रवक्ष्यामि - शृणु मैत्रेय योगिराट्
स्तवराज मिति ख्यातं - त्रिषु लोकेषु दुर्लभम् ॥

शम्भुना चोपदिष्टं च - पार्वत्यै हितकाम्यया
सर्वकामप्रदं नृणां - भुक्ति मुक्ति फलप्रदम् ॥

वा॥ अस्य श्री हनुमत् स्तवराज स्तोत्र मन्त्रस्य वसिष्ठ भगवान् ऋ
अनुष्टुप्छन्दः । श्री हनुमान् देवता । ह्रां बीजं । ह्रीं शक्तिः ।
कीलकं । मम श्री हनुमत्प्रसाद सिध्यर्थं जपे विनियोगः ।
[मूलेन न्यासं कृत्वा ।]

ध्यानम् :-

श्लो॥ उद्यन्मार्ताण्डकोटि प्रकट रुचिकरं चारु वीरासनस्थम्
मौञ्जी यज्ञोपवीताभरण मुरुशिखा शोभितं कुण्डलांगम्
भक्तानामिष्टदं तं प्रणुत मुनिजनं वेदनाद प्रमोदम्
ध्यायेद्देवं विधेयं प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ॥

श्री हनुमान्महावीरो - वीरभद्रवरोत्तमः
वीर श्शक्तिमतां श्रेष्ठो - वीरेश्वर वरप्रदः ॥

यशस्करः प्रतापाढ्यो - सर्वमङ्गल सिद्धिदः
सानन्दमूर्तिर्गहनो - गम्भीर स्सुरपूजितः ॥

दिव्यकुण्डलभूषाय - दिव्यालङ्कार शोभिने
पीताम्बरधर प्राज्ञ - नमस्ते ब्रह्मचारिणे ॥

कौपीन वसनाक्रान्त - दिव्व यज्ञोपवीतिने
कुमाराय प्रसन्नाय - नमस्ते मौंजिधारिणे ॥

सुभद्रश्शुभदात्रेच - सुभगो रामसेवकः
यशःप्रद महातेजा - बलाढ्यो वायुनन्दनः ॥

जितेन्द्रियो महाबाहो - वज्रदेहो नखायुधः
सुराध्यक्ष महाधुर्य - पावनो पवनात्मजः ॥

बन्धमोक्षकर श्शीघ्र - पर्वतोत्पाटनाय च
दारिद्रयभञ्जन श्श्रेष्ठ - स्सुखभोग प्रदायकः ॥

वायुजात महातेजाः - सूर्यकोटि समप्रभः
सुप्रभा दीप्तिमद्भूत - दिव्य तेजाय ते नमः ॥

अभयङ्कर मुद्राय - अपमृत्यु विनाशिने
संग्रामे जयदात्रे च - अविघ्नाय नमोनमः ॥

तत्त्वज्ञानामृतानन्द - ब्रह्मज्ञो ज्ञानपारगः
मेघनाद प्रमोहाय - हनुमद्ब्रह्मणे नमः ॥

रुच्याढ्य दीप्त बालार्क - दिव्यरूप सुशोभित
प्रसन्नवदन श्रेष्ठ - हनुमान् वै नमोस्तुते ॥

दुष्टग्रह विनाशाय - दैत्य दानव भञ्जनः
शाकिन्यादिषु भूतघ्न - नमोस्तु श्रीहनूमते ॥

महाधैर्य महाशौर्य - महावीर्य महाबल
अमेय विक्रमायैव - हनुमन् वै नमोस्तुते ॥

दशग्रीव कृतान्ताय - रक्षःकुल विनाशिने
ब्रह्मचर्य व्रतस्थाय - महावीर नमोस्तु ते ॥

भैरवाय महोग्राय - भीमविक्रमणाय च
सर्वज्वर विनाशाय - कालरूपाय ते नमः ॥

सुभद्रद स्सुवर्णांग - सुमङ्गल शुभंकर
महाविक्रम सत्वाढ्य - दिङ्मण्डल सुशोभित ।।
पवित्राय कपीन्द्राय - नमस्ते पापहारिणे
सुविद्य रामदूताय - कपिवीराय ते नमः ।।
तेजस्वी शत्रुहावीर - वायुज स्संप्रभावनः
सुन्दरो बलवान् शान्त - आञ्जनेय नमोस्तु ते ।।
रामानन्द जयकर - जानकीश्वसदाय वै
विष्णुभक्त महाप्राज्ञ - पिङ्गाक्ष बिजयप्रद ।।
राज्यप्रद सुमाङ्गल्य - सुभगो बुद्धिवर्धनः
सर्वसम्पत्ति दाता च - दिव्यतेज नमोनमः ।।
कल्याण कीर्त्या जयमङ्गलाय जगत्तृतीयं धवलीकृता
तेजस्विने दीप्त दिवाकराय नमोस्तुदीप्ताय हरीश्वर
महाप्रतापाय विवर्थनाय मनोजवा याङ्गुतवर्धनाय
प्रौढप्रतापारुण लोचनाय नमोऽञ्जनानन्द कपीश्वराः
कालाग्निदैत्य संहर्ता - सर्वशत्रु विनाशन
अचलोद्धारकश्चैव - सर्वमङ्गल कीर्तिद ।।
बलोत्कट महाभीम - भैरवोऽमितविक्रम
तेजोनिधिः कपिश्रेष्ठ - सर्वारिष्टार्ति दुःखहा ।।
उदधिक्रमणश्चैव - लङ्कापुर विदाहक
सुभुजो द्विभुजो रुद्रः - पूर्णप्रज्ञोऽनिलात्मज ।।
राजवश्यकर श्चैव - जनवश्यं तथैव च
सर्ववश्यं सभावश्यं -नमस्ते मारुतात्मज ।।
महापराक्रमाक्रान्त - यक्षराक्षस मर्दन
सौमित्रि प्राणदाता च - सीताशोक विनाशन ।।

रक्षोघ्नायाञ्जनासूनो - केसरीप्रियनन्दन
सर्वार्थदायको वीर - मल्लवैरि विनाशन ॥

सुमुखाय सुरेशाय - शुभदाय शुभात्मने
प्रभावाय सुभावाय - नमस्तेऽमित तेजसे ॥

वायुजो वायुपुत्र श्च - कपीन्द्रः पवनात्मजः
वीरश्रेष्ठ महावीर - शिवभद्र नमोस्तुते ॥

भक्तप्रियाय वीराय - वीरभद्राय ते नमः
स्वभक्तजन पालाय - भक्तोद्यान विहारिणे

दिव्यमाला सुभूषाय - दिव्यगन्धानुलेपनः
श्रीप्रसन्न प्रसन्नाय - सर्वसिद्धिप्रदो भव॥

वातात्मज मिदं स्तोत्रं - पवित्रं यः पठे न्नरः
अचलां श्रिय माप्नोति - पुत्रपौत्रादि वृद्धिदम् ॥

धनधान्य समृद्धिं च - आरोग्यं पुष्टिवर्धनम्
बन्धमोक्षकरं शीघ्रं - लभते वांछितं फलम् ॥

राज्यदं राजसन्मानं - संग्रामे जयवर्धनम्
सुप्रसन्नो हनूमान्मे - यशः श्री जयकारकः ॥

## आंजनेयाष्टकम्

श्लो॥ कपिश्रेष्ठाव शूराय - सुग्रीव प्रियमन्त्रिणे
जानकी शोकनाशाय - आञ्जनेयाय मङ्गलम् ॥

मनोवेगाय उग्राय - कालनेमि विदारिणे
लक्ष्मण प्राणदात्रे च - आञ्जनेयाय मङ्गलम् ॥

महाबलाय शान्ताय - दुर्दण्डी बन्धमोचन
मैरावण विनाशाय - आञ्जनेयाय मङ्गलम् ॥

पर्वतायुध हस्ताय - रक्षःकुल विनाशिने
श्रीराम पादभक्ताय - आञ्जनेयाय मङ्गलम् ॥

विरक्ताय सुशीलाय - रुद्रमूर्ति स्वरूपिणे
ऋषिभिस्सेविता यास्तु - आञ्जनेयाय मङ्गलम् ॥

दीर्घवालाय कालाय - लङ्कापुर विदारिणे
लङ्किणीदर्पनाशाय - आञ्जनेयाय मङ्गलम् ॥

नमस्ते ब्रह्मचर्याय - नमस्ते वायुनन्दन
नमस्ते गानलोलाय - आञ्जनेयाय मङ्गलम् ॥

प्रभावाय सुरेशाय - शुभदाय शुभात्मने
वायुपुत्राय धीराय - आञ्जनेयाय मङ्गलम् ॥

आञ्जनेयाष्टक मिदं - यः पठेत्सततं नरः
सिध्यन्ति सर्वकार्याणि - सर्वशत्रु विनाशनम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
हनुमत् स्तवराजोनाम द्विनवतितमः पटलः

* * *

# श्री पराशर संहिता

## *त्रिनवतितमः पटलः*

### —ः श्री हनुमत्कवचम् ः—

श्री पराशर ः

श्लो॥ हनुमत्कवचं वक्ष्ये - रामप्रोक्तं मुनीश्वर!
श्रेष्ठाच्छ्रेष्ठतमं लोके - भुक्तिमुक्ति फलप्रदम् ॥

॥ अस्यश्री हनुमत्कवचस्तोत्र मन्त्रस्य श्रीरामचन्द्र ऋषिः। अनुष्टुप् श्री हनुमान् देवता। मारुतात्मज इति बीजं। अञ्जनी सूनुः शक्तिः। वायुपुत्र इति कीलकं। मम श्री हनुमत्प्रसाद सिध्यर्थे विनियोगः।

[ह्रा मित्यादि कर हृदय न्यासं कुर्यात्।]

ध्यानम् :-

श्लो॥ ध्यायेद्बालदिवाकर द्युति निभं देवारि दर्पापहम्
देवेन्द्रप्रमुखैः प्रशस्त यशसं देदीप्यमानं रुचा
सुग्रीवादि समस्त वानरयुतं सुव्यक्त तत्त्वप्रियम्
संरक्तारुण लोचनं पवनजं पीताम्बरालंकृतम्॥

श्री रामचन्द्र उवाच :-

श्लो॥ हनुमान् पूर्वतः पातु - दक्षिणे पवनात्मजः
पातु प्रतीच्या मक्षघ्नः - पातु सागरतारकः॥

उदीच्या मूर्ध्वगः पातु - केसरी प्रियनन्दनः
अधश्च विष्णुभक्त स्तु - पातु मध्यं च पावनिः॥

अवांतरदिशः पातु - सीताशोक विनाशनः
लङ्काविदाहकः पातु - सर्वापद्भ्यो निरन्तरम्॥

सुग्रीवसचिवः पातु - मस्तकं वायुनन्दनः
फालं पातु महावीरो - भ्रुवोर्मध्ये निरन्तरः॥

नेत्रे छायापहारी च - श्रोत्रे च प्लवगेश्वरः
कपोलौ कर्णमूले तु - पातु श्रीराम किङ्करः॥

नासाग्र मञ्जनासूनु - र्वक्त्रं पातु हरीश्वरः
वाचं रुद्रप्रियः पातु - जिह्वां पिंगल लोचनः॥

पातु दन्तान् फाल्गुणेष्ट - श्चुबुकं दैत्यप्राणहृत्
पातु कण्ठं च दैत्यारिः - स्कन्धौ पातु सुरार्चितः ॥

भुजौ पातु महा तेजाः - करौ च चरणायुधः
नखान्नखायुधः पातु - कुक्षिं पातु कपीश्वरः ॥

वक्षो मुद्रापहारी च - पातु पार्श्वे भुजायुधः
लङ्काविभंजनः पातु - पृष्ठदेशे निरन्तरम् ॥

नाभिं च रामदूत स्तु - कटिं पा त्वनिलात्मजः
गुह्यं पातु महाप्राज्ञः - सक्थिनी च शिवप्रियः ॥

ऊरू च जानुनी पातु - लङ्काप्रासाद भंजनः
जंघे पातु महाबाहुः - गुल्फौ पातु महाबलः

अचलोद्धारकः पातु - पादौ भास्कर सन्निभः
पादान्ते सर्वसत्वाढ्यः - पातु पादांगुल स्तथा
सर्वाङ्गानि महाशूरो - पातु रोमाणि चात्मवित् ॥

श्लो॥ हनुमत्कवचं यस्तु - पठे द्विद्वा न्विचक्षणः
स एव पुरुष श्रेष्ठो - भुक्ति मुक्ति च विंदति ॥

त्रिकाल मेककालं वा - पठे न्मासत्रयं नरः
सर्वा नरीन् क्षणे जित्वा - स पुमान् श्रियमाप्नुयात् ॥

अर्धरात्रौ जले स्थित्वा - सप्तवारं पठे द्यदि
क्षयापस्मार कुष्ठादि - तापज्वर निवारणम् ॥

अश्वत्थमूलेऽर्कवारे - - स्थित्वा पठति यः पुमान्
स पुमान् श्रिय माप्नोति - संग्रामे विजयी भवेत् ॥

यः पठेद्भारये न्नित्यं - सर्वान्कामा नवाप्नुयात्
लिखित्वा पूजयेद्यस्तु - सर्वत्र विजयी भवेत् ॥

वज्रांगं पिङ्गकेशाढ्यं - स्वर्णकुण्डलमण्डितम्
नियुद्धकर्म कुशलं - पारावार पराक्रमम्
वामहस्ते महावृक्षं - दशास्य कर खण्डनम्
उद्यद्दाक्षिणदोर्दण्ड - हनुमन्तं विचिन्तयेत् ।।

अथात स्संप्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गवः
पुरा विभीषण प्रोक्तं - सर्वलोक हिताय वै
आपदुद्धारक स्तोत्रं - स्तोत्राणा मुत्तमोत्तमम् ।।

तन्मध्ये मन्त्र राजं च - सर्वकामप्रदं प्रभो
चतुष्पष्टयक्षरमय - मन्त्ररोज इति स्मृतः ।।

व।। अस्य श्री आपदुद्धारक हनुमन्मन्त्रस्य विभीषण ऋषिः। अनुष्
श्री हनुमान् देवता । ह्रां बीजं । क्लीं शक्तिः । क्रों कीलव
श्रीहनुमत्प्रसाद सिध्यर्थे जपे विनियोगः ।

[मूलमन्त्रेण न्यासं कुर्यात् ।]

श्लो।। पद्मराग मणिकुण्डल त्विषो पाटलीकृत कपोलमण्डल
दिव्यदेह कदलीवनान्तरे भावयामि पवमाननन्दनम्

आपन्नाखिल लोकार्ति - हारिणे श्रीहनूमते
अकस्मा दागतोत्पात - नाशनाय नमोऽस्तु ते ।।

सीतावियुक्त श्रीराम - शोकदुःख भयावहः
तापत्रितय संहारिन् - आंजनेय नमोस्तु ते ।।

आधिव्याधि महामारी - ग्रहपीडापहारिणे
प्राणापहर्त्रे दैत्यानां - रामप्राणात्मने नमः ।।

संसारसागरावर्त गर्त - संभ्रान्त चेतसां
शरणागत मर्त्यानां - शरण्याय नमो नमः ।।

राजद्वारे बिलद्वारे - प्रवेशे भूतसङ्कटे
गज सिंह महाव्याघ्र - चोर भीषण कानने ॥

महाभयाग्नि संछन्ने - शत्रुसंघ समाकुले
शरणार्ति शरण्याय - वायव्यात्मा नमोस्तु ते ॥

प्रदोषे वा प्रभाते वा - ये स्मरं त्यञ्जनासुतम्
अर्थसिद्धि लभेत्कीर्ति - प्राप्त वादजयं ध्रुवम् ॥

कारागृहे प्रयाणे च - संग्रामे देश विप्लवे
ये स्मरन्ति हनूमन्तं - तेषां नास्ति विपत्तथा ॥

मनुः :-

वज्रदेहाय कालाग्नि रुद्रा यामित तेजसे
दुष्ट दैत्य महादर्प - दलनाय नमोस्तु ते ॥

नमः प्लवंग सैन्यानां - प्राणदायक ते नमः
ब्रह्मास्त्र स्तम्भना यास्मै - नम श्श्रीरुद्रमूर्तये ॥

जप्त्वा स्तोत्र मिमं मन्त्रं - वसुवारं पठेन्नरः
राजद्वारे सभास्थाने - प्राप्त वाद जयं ध्रुवम् ॥

सर्वापद्भ्यो विमुच्येत - नात्र कार्या विचारणा
विभीषणकृतं स्तोत्रं - यः पठेत्सततं नरः ॥

रामेष्टं करुणापूर्णं - हनूमन्तं भयापहम्
शत्रुनाशकरं वंदे - सर्वाभीष्ट प्रदायकम् ॥

अनुष्टुभद्वयं ख्यातं - आपदुद्धारकं स्मृतम्
श्रेष्ठं सकल लोकेषु - सर्वसिद्धि प्रदायकम् ॥

अनुष्टुभद्वये ब्रह्मन् - होमं तर्पण मेव च
पृथक् पृथक् प्रकुर्वीत - मालामन्त्रेषु वाऽनघ ॥

अष्टोत्तर सहस्रं वा - जपे ध्यान परायणः
अनुष्टुभद्वय मिदं - आपदुद्धारकाह्वयम् ॥

इमं मन्त्रं पठे द्विद्वान् - सर्वकामा न्प्रयच्छति
अन्य यन्त्रं धारणाख्यं - कथ्यते श्रुणु सुन्दरम् ॥

षट्कोणं च लिखे यन्त्रं - भूर्जपत्रे च सुन्दरम्
वस्त्रे पट्टे कागदे च - भित्यां द्रव्यैः सुगन्धकैः ॥

ह्रौं मध्ययुतं साध्यं - नाम लेख्यं विशेषतः
तत स्तु वेष्टये त्तेन - माया बीजेन वै पुनः ॥

हनुमान् रक्षरक्षेति - षट्कोणेषु लिखेत्ततः
अन्तराले त्रिशूलानि - मायाबीजान्तराणि च ॥

एतद्यन्त्रं महच्छे्ष्ठं - सर्वसिद्धिकरं नृणाम्
साधयें त्सर्वकार्याणि - नात्र कार्या विचारणा ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
श्रीरामप्रोक्तं हनुमत्कवचकथनं नाम
त्रिनवतितमः पटलः

❀ * ❀

# श्री पराशर संहिता

## चतुर्नवतितमः पटलः

### —: श्री हनुमदष्टोत्तर शतनाम स्तोत्रम् :—

श्री पराशरः :

श्लो॥ स्तोत्रान्तरं प्रवक्ष्यामि - श्रुणु मैत्रेय तत्वतः
अष्टोत्तर शतं नाम्नां - हनूमत्प्रतिपादकम् ॥

आयुरारोग्य फलदं - पुत्र पौत्र प्रवर्धनम्
गुह्यादगुह्यतमं स्तोत्रं - सर्वपापहर नृणाम् ॥

व॥ अस्य श्री हनुमदष्टोत्तर शत दिव्यनाम स्तोत्र मंत्रस्य वि
ऋषिः । पङ्क्ति च्छन्दः। श्री हनुमान् परमात्मा देवता । मारुत
इति बीजं । अञ्जनासूनु रिति शक्तिः । वायुपुत्र इति की
मम श्री हनुमत्प्रसाद सिध्यर्थे जपे विनियोगः ।

श्लो॥ श्री अभूतपूर्व डिम्भ- श्री रञ्जनागर्भ सम्भवः
नभस्वद्वर सम्प्राप्तो - दीप्त कालाग्नि सम्भवः ॥
भूनभोंतरभिन्नाद - स्फुरद्गिरि गुहामुखः
भानुबिंब फलोत्साहो - पलायित विधुंतुदः ॥
ऐरावतग्रहा व्यग्रो - कुलिश ग्रसनोन्मुखः
सुराऽसुरायुधाभेद्यो - विद्यावेद्य वरोदयः ॥
हनुमा निति विख्यातो - प्रख्यात बलपौरुषः
शिखावान् रत्नमञ्जीरो - स्वर्णकृष्णोत्तरच्छदः ॥
विद्युद्वलय यज्ञोपवीत - द्यु मणिमण्डनः
हेममौंजी समाबद्ध - शुद्धजाम्बूनद प्रभः ॥
कनत्कनक कौपीनो - वटुर्वटु शिखामणिः
सिंह संहननाकारो - तरुणार्क निभाननः ॥
वशंवदीकृत मना - स्तप्त चामीकरेक्षणः
देहे वज्रो नखे वज्र - वज्रस्पर्शोग्रवालजः ॥
अव्याहत मनोवेगो - हरिर्दाशरथानुगः
सारग्रहण चातुर्य - श्शब्दब्रह्मैक पारगः ॥
पम्पानदीचरो वाग्मी - रामसुग्रीव सख्य कृत्
स्वामि मुद्राङ्कितकरो - क्षितिजान्वेषणोद्यमः ॥

स्वयंप्रभा समालोको - विलमार्ग विनिर्गमः
आम्बोधि दर्श नोद्विग्न - मानसोङ्गद स्थैर्यदः ॥
प्रायोपविष्टप्लवग - प्राणत्रात परायणः
अदेवदानवगतिः - अप्रतिद्वन्द्व साहसः ॥
स्वदेहसम्भव ज्जङ्घा - मरु द्रोणीकृतार्णवः
सागरश्रुत वृत्तान्त - मैनाककृत पूजनः ॥
अणोरणीया न्महतो - महीयान् सुरसार्ऽथितः
त्रिशद्योजन पर्यन्त - च्छाया छायाग्रहान्तकः ॥
लङ्काहंकार शमन - श्शङ्काटङ्क विवर्जितः
हस्तामलकव द्दृष्ट - राक्षसांतःपुराखिलः ॥
चिंतादुरन्त वैदेही - सम्पादन फलश्रमः
मैथिलीदत्त माणिक्यो - भिन्नाशोक वनद्रुमः ॥
बलैकदेश क्षपणः - कुमाराक्ष निषूदनः
घोषित स्वामिविजय - स्तोरणारोहणोच्छ्रियः ॥
रणरङ्ग समुत्साहो - रघुवंश जयध्वजः
इन्द्रजिद्युद्ध निर्भीतो - ब्रह्मास्त्र परिवर्तनः ॥
प्रभाषित दशग्रीवो - भस्मसात्कृत पट्टणः
वार्धिना शान्तवालार्चिः - कृतकृत्योत्तमोत्तमः ॥
कल्लोला स्फाल वेलांत - पारावारो परिप्लवः
स्वाग माकांक्ष कीशौध - दृक्चकोरेन्दुमण्डलः ॥
मधुकानन सर्वस्व - संतर्पित बलीमुखः
दृष्टा सीतेति वचना - त्कोसलेन्द्राभिनन्दितः ॥
स्कन्धस्थ कोदण्डधरः - कल्पांत घननिस्वनः
सिंधुबंधन सन्नाह - स्सुवेलारोह संभ्रमः ॥

चतुर्नवतितमः पटलः

अक्षाख्य बलसंरुद्ध - लङ्का प्राकार भञ्जनः
युध्यद्वानर दैतेय - जयापजय साधनः ।।

रामरावण शस्त्रास्त्र - ज्वालाजाल निरीक्षणः
मुष्टि निर्भिन्न दैत्येन्द्रो - मुहुर्नुत नभश्चरः ।।

जाम्बवन्नुति संहृष्टो - समाक्रान्त नभश्चरः
गन्धर्व गर्व विध्वसी - वश्यद्दिव्यौषधी नगः ।।

सौमित्रि मूर्छा शान्त्यर्थ - प्रत्यूष स्तुष्ट वानरः
रामास्त्र ध्वंसि तेन्द्रारि - सैन्य विन्यस्त विक्रमः ।।

हर्ष विस्मित भूपुत्री - जयवृत्तान्त सूचकः
राघवी राघवारूढ - पुष्पकारोह कौतुकः ।।

प्रियवाक्तोषित गुहो - भरतानन्द दायकः
श्री सीताराम पट्टाभिषेक - सम्भार संभ्रमः ।।

काकुत्स्थ दयिता दत्त - मुक्ताहार विराजितः
रामायण सुधास्वाद - रसिको रामकिङ्करः ।।

अमोघमन्त्र यन्त्रौघ - स्मृति निर्धूत कल्मषः
भजत्किंपुरुषद्वीपो - भविष्यत्पद्म सम्भवः
आपदुद्धारक श्रीमान् - सर्वाभीष्ट फलप्रदः ।।

नामा नीमानि - यः कश्चि - दनन्यगति कः पठेत्
मृत्योर्मुखे राजमुखे - निपतन्नावसीदति ।।

विश्वाकर्षण विद्वेष - स्तम्भनोच्चाटनादयः
सिध्यन्ति पठना देव - नात्र शङ्का कुरु क्वचित् ।।

नामसंख्या प्यपूपानि - योदत्ते मन्दवासरे
छायेव तस्य सततं - सहायो मारुति र्भवेत् ।।

अने नाष्टोत्तरेणैव - त्रिलोका नपि साधयेत्
ऋषिर्विभीषण च्छन्दो - पंक्ति स्त स्याधिदेवता
हनुमान् तत्प्रसादार्थे - विनियोग इ तीर्यते ॥

[ग्रन्थान्तरे सुदर्शन संहितेनोक्तम्]

श्लो॥ जगत्प्राणसमो जप्य - मन्त्रान् सर्वार्थ सिद्धिदान्
तन्मध्ये मन्त्रराजश्च अष्टाक्षर मुदीरितम् ॥

तस्यानुष्ठान मात्रेण - भवेत्सर्वार्थ साधनः
षट्कर्म साधनं चैव - नाना सिद्धिमयैस्सदा ॥

यांतमादि स्वरोपेतं - बिन्दुनाभूषितं प्रिये
प्रथमं बीजमेवास्य - सर्वपाप निबर्हणम् ॥

आर्यमादि स्वरोपेतं - द्वितीयं बीजमुत्तमम्
खांत वर्ण तृतीयं च - प्रत्येकं मुनिपुङ्गव ॥

भांतं स्तु स्वरोपेतं - चतुर्थं बीज मुच्यते
बांतमादि स्वरोपेतं - पञ्चमं बीज मेव च

स्तु वर्ण मतो मांतं - वह्निजायां तथोच्चरेत्
अष्टाक्षर मिदं मन्त्रं - जपे द्वे तादि योगिराट् ॥

अथ यन्त्रं प्रवक्ष्यामि - श्रुणुष्व मुनि पुङ्गव
आदौ चन्द्रं समालिख्य - अष्टकोणं लिखेत्ततः ॥

पुनर्वर्तुल मालिख्य - भू पुरद्वय मालिखेत्
मन्त्रराज मनुं तत्र - प्रादक्षिण्य क्रमेण वै ॥

प्रणवं विलिखेन्मध्ये - मंत्रवर्णान् लिखेत्ततः
पूर्वकोणं समारभ्य - प्रादक्षिण्या क्रमेणवै ॥

सर्वान् षोडश संगृह्य - विलिखेद्भूपुर द्वयम्
प्राणप्रतिष्ठां कुर्वीत प्रत्यहं पूजयेद्बुधः ।।

अष्टाक्षरी महाचक्रं - देवदानव दुर्लभम्
अवार्य चरण द्वन्द्वे - नमस्कृत्वा कृताञ्जलिः ।।

गुरुं संपूज्य विधिव - द्गृह्णीयाच्चक्रमुत्तमम्
ऋषिरीश्वर ये वात्र - छन्दोनुष्टुभदा हृदम् ।।

देवता चाञ्जना'पुत्रो - महाबल पराक्रमः
बीज माद्य मिदं मन्त्रैः - बीजमेव कुलेश्वर ।।

कीलकं प्रणवं चैव - स्वाहाशक्ति मुदाहृतम्
न्यासं यत्नात्प्रवक्ष्यामि - हनूमन्मन्त्र वादिभिः ।।

सर्वसिद्धिप्रदं न्यासं - न्यासो दशविधात्मकः
न्यस्य प्रथमता देव - केशवादि सुमंत्रकम् ।।

द्वितीयं मन्त्र बीजेन - तृतीयं मनुनासह
न्यसेच्चतुर्थमं यादि - माया श्री पञ्चमं तथा ।।

श्री कामराजेन षष्ठं - न्यास मुदाहृतम्
सप्तमं बालयायुक्तं - तत्संपुट मथाष्टकम् ।।

नवमं वायुर्बाजेन - सम्पुटं समुदाहृतम्
एतदुक्तं समस्तेन - दशमं न्यास मेवच ।।

ए तद्दशविधं न्यासं - आञ्जनेयस्य पार्वति !
न्यासानुष्ठान मात्रेण - सिद्धकायो भवेद्ध्रुवम ।।

तस्यास्पशन मात्रेण - सर्वपापैः प्रमुच्यते
शाकिनी डाकिनी चैव - पिशाच ब्रह्म राक्षसाः ।।

पलायन्तेव गिरिजे - पदावा संस्पृशेन्नरः
न्यसेद्वत्सर मात्र तु · 'यास मेतत्समाहितः ।।

वाचामर्थैः भवेत्तस्य - शापानुग्रह कारकम्
बहुना किमहोक्तेन - न्यासमात्रेण पार्वति ।।
यं यं कामयते चित्ते - तं तमाप्नोति निश्चितम्
अथ न्यासं प्रवक्ष्यामि - आञ्जनेयस्य पार्वति ।
ध्यानमात्रेण मनुजै - ष्पट्कर्म फलदं प्रिये ।।

स्फटिक रजित वर्णं - मेखलां ब्रह्मसूत्रम्
कर धृत जपमाला - बद्ध पद्मासनस्थम्
हृदि रघुवर मूर्ति - सुस्थिरीकृत्य विश्वम्
तृणमिव गणयंतं - चिंतये द्वायुपुत्रम् ।।

शांति कर्मसु गिरिजे - चिंतयेच्छांत विग्रहम्
एवं कर्मानुरूपेण - प्रयोगं च समाचरेत्
लक्ष मेकं पुरश्चर्या - अधिकारस्य सिद्धये ।।

पुरश्चर्या तु मन्त्रस्य - तत्व लक्षक्षपाशनः
दशांशं तर्पणं धीमान् - गो क्षीरेण समाहितः ।।

तद्दशांशं हवेत्क्षीर - शर्कराज्य समिश्रितम्
भोजयेत्तद्दशांशं तु - ब्राह्मणान् वेदपारगान् ।।

एवं कृते पुरश्चर्या - सिद्ध मंत्रो भवेद्ध्रुवन्
एवं साधित मन्त्रेण - प्रयोगं सम्यगाचरेत् ।।

पुरश्चर्या विनामंत्रं - न कुर्याच्च कदाचन
प्रयोगानाचरे त्पंच - मारणं न कदाचन ।।

मारणे पातकं याति - देवता शाप माप्नुयात्
प्रयोगांते कुलेशान - भोजयेद्ब्राह्मणान् बहून् ।।

अन्नशांत्याहरेत्पापं - अचमन्नेन तिष्ठति
ज्ञानं भुक्ति तदादेव - वैराग्येण कलौ नृणां ।।

यत्फलं लभते ब्रह्म - तत्फलं चान्नदातयोः
अथ पूजा विधानार्थं - यंत्रं च कथ्यतेधुना ॥

षट्पत्रं वसुपत्रं च - चतुरश्रं च बाह्यतः
बीज युक्तं लिखेत सम्यग्ग्राममध्ये हनूमतः ॥

षट्कोणेषु षडङ्गानि - बीज युक्तानि संलिखेत्
बीजत्रय च कोणाग्रे - लिखेत्सम्यक्पुनस्तथा ॥

अञ्जनी पुत्राय च तथा - ततो वै रुद्रमूर्तये
वायुसुता येति तथा - जानकी जीवनाय च ॥

रामदूतायेति तथा - ब्रह्मास्त्र वारणाय च
षट्कोणस्यांतरालेषु - विलिखेन्नाम षट्ककम् ॥

वसुपत्रेषु बीजानि - नामानि च समालिखेत्
सुग्रीवायांगदायाय - सुषेणाय तत परम् ॥

नलायादपि नीलाय - तथा जाम्बवते पदम्
प्रहस्ताय सुवेषाय - दलमध्येषु लेखयेत् ॥

रामभक्तो महातेजाः - कपीश्वर महाबलः
द्रोणाद्रिहारको मेरु - पीठकार्चन कारकः ॥

दक्षिणाशा भास्कर श्च - सर्वविघ्न निवारकः
दलान्तरेषु लेख्यानि - नामाकृष्टौ च यत्नतः ॥

लोकपालान् सायुधां श्च - चतुरश्रतु संलिखेत्
रक्षोघ्नाय विषघ्नाय - भूतघ्नाय ततः परम् ॥

पर शस्त्रांत्र मन्त्राणां - यन्त्रघ्नां श्च विशेषतः
सर्वव्याघ्र महाचोर - भयघ्नाय जितात्मने ॥

ब्रह्मग्रह महाराज - कोपघ्नाय निरन्तरम्
कृत्याग्रहबलघ्नाय - कुविघ्नाय च सर्वत: ॥

रामप्रियाय रुद्राय - रामभक्ति रताय च
भक्त प्रियाय जगती - दुर्भिक्षादि निवारणे ॥

पार्थोग्र सङ्करानन्त - शक्ति विक्रम वर्धने
अनन्त नगर ग्राम - पुरपट्टण लक्षणे ॥

स्वामिभक्ताय शूराय - वीरभक्ताय योगिने
स्वभक्त दान संग्रामे - विजयो विविदर्धने ॥

इत्येतद्दिक्षु संलेख्यं - स्तुताख्यं श्लोक सप्तकम्
एवं यन्त्रं पठेत्सम्यक् - पूजाकार्यो हनूमतः
अवाप्तं वांछितं सर्वं - प्राप्य त्येवनिश्चितम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
श्री हनुमदष्टोत्तरशतनामस्तोत्रं नाम
चतुर्नवतितमः पटलः

# श्री पराशर संहिता

## *पञ्चनवतितमः पटलः*

### —: श्रीरामप्रोक्तं हनुमदष्टोत्तरशत नाम स्तोत्रम् :—

श्री पराशरः :—

श्लो॥ अन्यत् स्तोत्रं प्रवक्ष्यामि - रामप्रोक्तं महामुने
अष्टोत्तरशतं नाम्नां - हनुमत्प्रतिपादकम् ॥

॥ अस्य श्री हनुमदष्टोत्तर शत दिव्यनाम स्तोत्र मन्त्रस्य श्रीराम ऋषिः। अनुष्टुप्छन्दः । श्री हनुमान् देवता। मारुतात्मज इति बं अञ्जना सूनुरिति शक्तिः । वायुपुत्र इति कीलकं । मम श्री हनु प्रसाद सिध्यर्थे जपे विनियोगः ।

गो॥ नमस्तस्मै हनुमते - येन तीर्णो महार्णवः
रामलक्ष्मण सीताभि - स्तीर्ण श्शोकमहार्णवः ॥

. सप्तषष्टिर्हितां कोटि - वानराणां तरस्विनां
य स्समुज्जीवयामास - तं वन्दे मारुतात्मजम् ॥

यो दक्षिणं दिशं गत्वा - वैदेहीं राममुद्रया
अजीवयत्त ममृतं - प्रपद्ये पवनात्मजम् ॥

इतिहास पुराणेषु - प्रकीर्णाना मितस्ततः
शत मष्टोत्तरं नम्नां - संग्रहिष्ये हनूमतः ॥

ो रामचन्द्र उवाच ।

ओं आयुष्मते । अप्रमेयात्मने । हनुमते नमः । मारुतात्मजाय।अञ्ज नयाय श्रीमते । बालार्क फलभुक्धियः । सूर्यपृष्ठ गमनाय पुण्याय । ास्त्रार्थ तत्त्वविदे । बहु श्रुत व्याकरणाय । रामसुग्रीव सख्यकृते । रामः ाय। रामदूताय। रामात्मने। रामदैवताय । रामभक्ताय । रामसखा मनिधिः । रामहर्षणाय । महानुभावाय । मेधाविने । महेन्द्रगिरि मर्दन नाक मानिताय । मान्याय। महोत्साहाय। महाबलाय । देवमाताह्नित्रिवह ाष्पदीकृत वारिधये । लङ्काद्वीप विचित्राङ्गाय । सीतान्वेषण कोविदा तादर्शन सन्तुष्टाय । राम पत्नी प्रियंवदाय । दशकण्ठ शिरच्छेत्रे । . ए क्ष्याय । अभिदर्शनाय। धीराय। काञ्चन वर्णाङ्गाय । तरुणार्कनि सागलार्चिषे । द्युतिमते । वज्रदंष्ट्राय । नखायुधाय। मेरुमन्दर सङ्काश

ब्रद्रुम प्रतिमाननाय। समर्थाय। विश्रान्ताय। दुर्धर्षाय। शत्रु कम्पन
शोकवनिकाच्छेत्रे। वीरकिङ्कर सूदनाय। चैत्यप्रासाद विध्वंसिने।
ाली निषूदनाय। सीताप्रसादकाय। शौरये वस्त्रलांगूलपावकाय।
ङ्काय। अप्रमेयात्मने। महाजीमूत निस्वनाय। संस्कार सम्पन्न वच
विभीषण विशेषकृते। मुष्टिपिष्ट दशास्याङ्गाय। लक्ष्मणोद्वाहन प्रिय
म्राक्षघ्ने। अकम्पनघ्ने। त्रिशिरघ्ने। निकुम्भघ्ने। पापराक्षस संघघ्ना
पनाशन कीर्तनाय। मृतसंजीवनाय। योगिने। विष्णुचक्र पराक्रमा
स्तन्यस्तौषधि गिरये। चतुर्वर्गफलप्रदाय। लक्ष्मणोज्जीवनाय। श्लाघ्य
क्ष्मणार्धहृतौषधये। दशग्रीव वधोद्योगिने। सीतानुग्रह भाजनाय।
यागमाय। दिव्याय। वैदेहीदत्त भूषणाय। रामाद्भुत यशस्तम्भा
वद्रामकथास्थिताय। निष्कल्मषाय। ब्रह्मचारिणे। विद्युत्संघात पि
य। कदलीवन मध्यस्थाय। महालक्ष्मी समाश्रयाय। भीमनिष्कम्पना
माय। अव्यग्राय। भीमसेनाग्रजाय। युगाय। धनजय रथारूढाय।
य शिवप्रियाय। चूर्णीकृताक्षदेहाय। ज्वलिताग्नि निभाननाय
ङ्गाक्षाय। विभवे आक्लान्ताय। लङ्किणी प्राणघातकाय। पुच्छा
ध लङ्काय। माल्यवत्प्राणहारिणे। श्रीप्रदाय, अनिल सूनवे। वा
नर नायकाय नमः।

॥ इत्येवं कीर्तनं यस्य - नाम्ना मष्टोत्तरं शतम्
पुण्यं पवनपुत्रस्य - पावनं परिकीर्तनम् ॥
कीर्तयन् श्रावयन् श्रुण्वन् - आयुष्मत्ता मरोगतां
विष्णुभक्ति श्रियं दीप्ति - प्राप्नोत्येव परायणः ॥
महाभयेषु युद्धेषु - चोर व्याल मृगेषु च
जपतां कुरुते नित्यं - भगवान् पवनात्मजः ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री रामप्रोक्तं श्री हनुमदष्टोत्तर शतनाम स्तोत्रंनाम
पञ्चनवतितमः पटलः

* * *

# श्री पराशर संहिता

## षण्णवतितमः पटलः

### -: शृङ्खलाबन्ध मोचन मन्त्र कथनम् :-

श्री पराशर :

श्लो।। अन्यद्रहस्यं वक्ष्यामि- गुह्याद्गुह्यतमं मुने
आयुरारोग्य फलदं · पुत्रपौत्र प्रवर्धनम्
अष्टोत्तरशतं नाम्नां - हनुमत्प्रतिपादकम्
अगस्त्येन पुरा प्रोक्तं - सर्वकाम फलप्रदम् ।।

व।। अस्य श्री हनुमदष्टोत्तरशत दिव्यनामस्तोत्र मन्त्रस्य अगस्त्यै ऋषिः। अनुष्टुप्छन्दः। श्री हनुमानदेवता । मारुतात्मज इति अञ्जना सूनुरिति शक्तिः। वायुपुत्र इति कीलकं। मम श्री साद सिध्यर्थे जपे विनियोगः ।

व।। मूल मंत्रेण करशुद्धि व्यापक न्यासं कृत्वा ।

ध्यानम् :-

श्लो।। उद्यद्भास्वत्सहस्र प्रचुरतर घृणि भास्वरं स्वक्कपोल
मध्ये गाङ्गेय रम्भा गहन मदनिभूदत्तिहाराभिरामम्
गायन्तं रामचन्द्रं स्फुट मकुटमुखै भूषणैर्भूषिताङ्गं
यावलग्द्राम मन्त्रं मनसि मृदुपदं पावनिं भावयामि

व।। श्री अगस्त्य उवाच ।

।। ओं श्रीमते नमः वायुसुताय शूराय श्री हनुमते जितेन्द्रियाय लक्ष्मण रामेष्टाय शिवमूर्तये शिवांशधृतये आञ्जनेयाय : फालाक्षाय हरिवल्लभाय भीमसेनाग्रजाय भीमाय शोषिताखि साय लङ्काविदाहकाय शांताय लङ्काप्रासादभञ्जनाय सुग्रीवर

सूक्ष्माय सुन्दराङ्गाय सुरार्चिताय हताक्षाय पलाशघ्ने फलाशिने फलदायकाय पालिताखिल भक्ताय फलविभक्षिताय अरुणाय ब्रह्मास्त्र स्तम्भनाय ब्रह्मज्ञान परायणाय पार्थध्वजाय पार्थ सखाय पालिताखिल भूजनाय वज्र देहाय वज्रनखाय वज्रदंष्ट्राय वराननाय वज्रहृत हनवे वज्रहस्तार्चितांघ्रये कालाग्निसदृशक्रोधाय कालाग्नि सदृशेक्षणाप कालाग्नि रुद्ररूपाय कालाग्नि समविक्रमाय रामानुज प्राणदात्रे रामायण विभूपणाय रामपादांबुजासक्ताय रामतोषकाय पिङ्गाक्षाय पीनवक्षसे पीतांवर परिष्कृताय पीनायत महाबाहवे पीडिताखिल दानवाय गोष्पदीकृत वाराशए गोपुत्रिशोकनाशाय गोलांगूलेश्वरसखाय गोत्रारि प्रीतियर्धनाय मनोजवाय मरुद्वेगाय महाधीराय महामतये रावणासुर दर्पघ्नाय रामदूताय रविद्युतये सञ्जीवनी समानीत समुज्जीवित वानराय प्राकाराकृत महावलाय रमानाध सस्तुताय केसरीप्रियपुत्राय केसरीसमविक्रमाय केयूरिणे नूपुरिणे हारिणे केशवानुचराय कपये छायेऽऽधीत विद्यकाय छाया छायापहाय छायानुतापिने छायापुत्र मुखार्तिने अशोकवनिका हन्त्रे अशोकीकृत भानुजाय सप्तमन्त्रिसुत हन्त्रे सप्तार्चिसदृश प्रभाय सुर कार्यकृतोद्योगाय सुरसाकृत संस्तुतये सूक्ष्मरूपिणे सुवेषाय सुरसा गात्रनिर्गतये रामाख्यांकित मुद्राधृतये रामार्पित शिरोमणये राम कार्यसिक्त मनसे रामवाहनाय रणोद्धताय तापत्रयासंहारिणे तामसाः भयदायकाय तप्तकाञ्चन कौपीनाय तरुणारुण कुण्डलाय हेमरम्भा वनवासाय हेमयज्ञोपवीतधृते हेमरत्नमालिने हेमाचलतपश्चराय पारिजातावनीजात मूलवासिने मुदान्विताय महाकन्यादत्तमुक्तामणिहार विभूषणाय ब्रह्मदत्तवरोपेताय ब्रह्मण्याय ब्रह्मवित्तमाय ब्रह्मानन्द पराय वीराय भविष्यत्कमलासनाय श्री सुवर्चलावल्लभाय उष्ट्रारूढाय कपीश्वराय नमः ।। ६

॥ इति श्री हनुमन्नाम - संस्तवं मुनिनाकृतम्
यः पठेच्छृणुयाद्वापि - भक्तियुक्तेन चेतसा ॥
अजाड्य मुत्तमैश्वर्यं - वाक्पटुत्व मरोगता
स पुमान् लभते कामान् - परमां मुक्तिमाप्नुयात् ॥
एतैर्नामपदैर्दिव्यैः - योऽर्चयेदञ्जनासुतम्
रक्तमाल्यै रमूल्यैश्च - मर्वादि तुलसीदलैः ॥
पुन्नाग करवीराब्ज - चाम्पेय कुसुमादिभिः
सपुत्र पौत्र सहितं - सर्वभोग मवाप्नुयात् ॥ १

—ः शृङ्खलाबन्धमोचन हनुमन्मन्त्रः :—

पराशरः :-

॥ मन्त्रांतरं प्रवक्ष्यामि - सावधानमना श्शृणु
शृङ्खलाबन्ध मोक्षार्थं - मालामन्त्रं वदेत्पुनः
सर्वलोक हितार्थाय - मन्त्राणामुत्तमोत्तमम् ॥ १

अस्य श्री शृंखलाबन्ध मोचन हनुमन्माला मन्त्रस्य ईश्वर ऋषिः अनुष्टुप्छन्दः । कालाग्नि रुद्र वीरहनुमान् देवता । ओं बीजं । स्वाहा शक्तिः । हनुमते इति कीलकं । मम श्री हनुमत्प्रसाद सिध्यर्थे जपे विनियोगः । मूलमन्त्रेण न्यासं कुर्यात् ।

नम् :—

। उद्यन्मार्ताण्ड कोटि प्रकट रुचिकरं चारु वीरासनस्थम्
बिभ्राणं हेम मौंजीं वरमणिमकुटं कुण्टलाभासगण्डम्
भक्तानामिष्टदं तं प्रणुत मुनिजनं वेदनादं प्रमोदम्
भीमाकारं त्रिनेत्रं मम शुभफलदं वायुपुत्रं नमामि ॥ १

ओं श्रीराम लक्ष्मण मनोहारी सीताशोक विनाशिने श्री हनुमते स्वाहा । ओं नमो हनुमते प्रकटित पराक्रमाक्रान्त सकल दिङ्मण्डल यशो वितान धवलीकृत जगत्त्रितयाय वज्रदेह रुद्रावतार लङ्कापुरी दहन उदधि बन्धन दशग्रीव शिरः कृतान्तक सीतासमाश्वास

अञ्जनागर्भ सम्भूत श्री रामलक्ष्मणानन्दकर कपिसैन्य प्राकारस् सन्धानकरण पर्वतोत्पाटन सर्वशिरोरोग विनाशन चोराग्नि नाशन परमन्त्र यत्र तंत्र भेदन सर्व स्त्री पुरुषकम्पितकराय भेदन ओं ह्रां ह्रीं ह्सौं एहि एहि बीरहनुमते परबल प्रभञ्ज प्रति-भट शिरच्छंदनाय शरणागतरक्षणाय सर्वकार्याणि साधय र सर्वार्थ साधनाय हुंफट् स्वाहा । ओं नमो हनुमते महावीर पराक्र एहि एहि मम बन्धमोचनं कुरु कुरु मोचय मोचय त्राहि हनुमते स्वाहा ।

श्लो॥ हरिमर्कट मर्कट मन्त्रमिदं
परिलिख्यति लिख्यति भूमितले
यदि नश्यति नश्यति शत्रुकुलं
यदि मुंचति मुंचति शृङ्खलिकाम् ॥

एतस्य वीरहनुमान् - मालामन्त्रस्य वर्णकाः
षडुत्तराणि त्रिशतान्युक्ता न्यागम वेदिभिः ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
अष्टोत्तरशतनाम शृङ्खलाबन्ध मोचन मन्त्र
कथनं नाम षण्णवतितमः पटलः

* * *

## श्री पराशर संहिता

### सप्तनवतितमः पटलः

### -: श्री हनुमत्पताका प्रभाव कथनम् :-

पराशरः :-

॥ अन्यद्रहस्यं वक्ष्यामि - श्रृणुष्व मुनिपुङ्गव!
पुरा धनञ्जय स्साक्षात् - द्वापरे जयकांक्षया ॥

हनूमन्तं पताकायां - संस्थाप्य कपिनायकम्
जगाय सकलान् शत्रून् - सर्वलोकेषु विश्रुतः
तेजसा वजुनो लोके - कपिध्वज इति श्रुतः ॥

श्री मैत्रेयः :-

हनूमन्तं पताकायां - निर्माण विधि मुत्तमम्
वदस्व मुनिशार्दूल - सर्वागम विशारद ॥

श्री पराशरः :

श्लो.। द्विजन्म पुण्यवनिता - रचितैः श्वेततन्तुभिः
कार्पास तन्त्री सहितैः - कुर्याच्छास्त्रोक्तपूर्वकम् ॥

त्रिहस्तं पञ्चहस्तं च - पटं कुर्वेत मांत्रिकैः
अरत्नित्रयमाख्यातं - वैपुल्यं तस्य सुव्रत ॥

तत्पटंच समानीय - पूजयेद्रविवासरे
रक्ताब्जैः करवीरै श्च - मूलेन मनुनायुतम् ॥

पूजाफलान्यथानीय - शतमष्टोत्तरं तु वा
शास्त्रोक्त विधिना मन्त्रैः - पञ्चवक्त्र हनूमतः ॥

हुने द्वैदिक वह्नौ च - तत्फलानां तु संख्यया
तदङ्गारान् रवौग्राह्य - मन्त्रये त्पूर्ववत्पुनः ॥

कपिकोशातकीपत्र - द्रवेणैवतु पेषयेत्
तत्करेणालिखेत्सम्यक् - हनूमन्तं सुबुद्धिमान् ॥

मूर्ध्नि पञ्चास्य मन्त्रं तु - तस्याष्टार्णं करेलिखेत्
हृदिमन्त्रं लिखेद्विद्वान् - प्रतापाख्य हनूमतः ॥

पाणे चास्त्रं लिखेत्सम्यक् - स्पष्टवर्णै स्तु संयुतः
प्राणस्थापन मन्त्रं च - हृदयेवेष्टयेत्पुनः ॥

कृष्णाङ्गार चतुर्दश्यां - निशि पूजां समाचरेत्
बलि दद्याच्चरुं चैव - गुडोदक पुरस्सरम् ॥

दीक्षायांच प्रयोगेषु - पुरश्चरण कर्मसु
बलि दद्या देवमेव - सर्वविघ्न प्रशान्तये ॥

निशाबलिः क्रूरकार्ये - संध्यायां शुभकर्मणि
भौमरात्रि बलि दत्वा - तदानी मेव साधकः ॥

वलिमन्त्रं प्रवक्ष्यामि - सर्वसाधारणं मुने !
ओं नमः पद माभाष्य - नमो भगवते पदम् ॥

वीरशब्द मथोच्चार्य - वराय तदनन्तरम्
वायुपुत्रायेति पदं - बलि मित्युच्चरेत्ततः ॥

गृह्णे ति द्वय मुच्चार्य - वह्निजायां समुच्चरेत्
पञ्चविंशति वर्णस्तु - मन्त्रोऽयं बलिकर्मणि ॥

अव्रणं वेणु मादाय - बध्वासम्य वसुबुद्धिमान्
रणवैरि समूहस्य - तत्पताकाय दर्शनात् ॥

आश्चर्यदं भयं चैव - हृदये संप्रपद्यते
स्थलंत श्च पतन्त श्च - रुदन्त श्च रणे नृपाः ॥

बुद्धि श्च स्खलते तेषां - तथा युद्ध विशारदाः
भ्रमाकुला तदायुक्ताः - चित्तभ्रंश समन्विताः ॥

भटाश्च वीरवर्या श्च - पलायन परायणाः
वाजिनो वानरं दृष्ट्वा - भयभ्रांति समन्विताः ॥

न चलंति न धावंति - ताडनाद्दुर्जना दपि
उष्ट्रा इच गज सङ्घा इव - मृगेन्द्र ताडिता इव
तिष्ठेयुर्जीवव त्सर्वे - पताकस्य प्रभावतः ॥

एवं रणाङ्गणे सद्यो - राजभट गजा इव ये
महाभय भ्रमं प्राप्य - पलायनपरो भवेत् ॥

पट्टणे गिरिदुर्गे वा - ग्राम मध्ये तु बुद्धिमान्
एत त्पताक मारोप्य - वेणुनाऽत्युन्नते न च ॥

चरलग्ने निशायांतु - रवौ पूजाकृता यदि
त्रिदिनाच्छत्रवत्सर्वे - पलायन्त्येव निश्चितम् ॥

पूजयेदगृहमध्ये तु - देहल्युपरि बुद्धिमान्
तस्य शत्रुसमूहा इच - पलायन्ते स्वभावतः ॥

भूत प्रेत पिशाचाद्या - भेताल ब्रह्मराक्षसाः
शाकिनी डाकिनी चैव - भूचराः खेचराः ग्रहाः ॥

क्षयापस्मार रोगाश्च - कामिने भूत मेव च
पताक दर्शना देव - पलायन्ते सुनिश्चयः ॥

सर्प वृश्चिक लूताद्याः - ये ये घातुक जन्तवः
ग्रामात्पलायनं यांति - शिवस्य वचनं यथा ॥

एतत्पताक माहात्म्यं - शिवो जानाति नापरः
सुलभाज्जय मिच्छन्तो - कुरुते त ह्यसंशयः ॥

गुरुं संपूज्य यत्नेन - वस्त्रालङ्करणादिभिः
अनन्तरं पताकां च - गृह्णीया च्च तपोनिधे ॥

न देयं दुष्टहृदये - न देयं पाप कर्मणे
अविनीताय शिष्याय - विश्वास रहिताय च ॥

पञ्चविंशति संख्याकान् - ब्राह्मणान्भोजयेत्ततः
मासि मासि गृहे पूजाः - अपूपा नर्पयेत्सुधीः ॥

चंडाल स्पर्शनादीं श्च - स्त्री रज स्स्पर्शनं तथा
न कारये त्पताकायाः - यत्नेन परिरक्षयेत् ॥

एवं यः कुरुते योगिन् - वांछासिद्धिर्भवे द्ध्रुवम् ॥

अन्यद्रहस्यं वक्ष्यामि - श्रृणु मैत्रेय तत्वतः
कुंकुमागरु कस्तूरी - चंदनं नागकेसरैः ॥

पद्मोत्पल दलैश्चैव - कल्हार कुसुमैस्समम्
आदित्योदय वेलायां - पेषये न्नववारिणा ॥

प्रक्षाल्य दृषदं यत्नात् - कन्या हस्तेन साधकः
छाया शुष्कं ततः कृत्वा - ग्रहणं संस्पृशन् जपेत् ॥

तिलकं वाञ्जनं वापि - कृत्वा गच्छे त्सभादिकम्
मोहये न्नरीं नारश्च - पशु पक्षि मृगादिकान् ॥

देव गन्धर्व यक्षां श्च - मनुष्याणां तु का कथा ॥
अन्यद्रहस्यं वक्ष्यामि - लोकाना मुपकारकम् ॥

कुंकुमागरु कर्पूर - चन्दनोशीर सारसैः
एत संमिश्रच बहुलैः - पेषये न्नववारिणा ॥

त्रिवार मङ्गलेपन - मंत्रित पञ्चधा प्रभो
स्त्रीणां च पुरुषाणां च - दृष्ट्वा मोहन मेव च ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री हनुमत्पताक प्रभाव कथन नाम
सप्त नवतितमः पटलः

# श्री पराशर संहिता

## अष्टनवतितमः पटलः

### -: पंच मन्त्र कथनम् :-

श्री पराशर :

श्लो॥ पुरा बदरिकारण्ये - नरनारायण प्रभू
सुदर्शनस्य महतः - पञ्चवक्त्र हनूमतः ॥
चक्रतुः पञ्चवक्त्राणां · उपदेशं मुदान्वितौ
तानेव हनुमन्मन्त्रान् - पार्वत्यै शङ्करोब्रवीत् ॥
ता नद्य तव वक्ष्यामि - श्रुणु सर्वार्थ साधकान्
भक्तोसीति न मे किंचित् - तव वाच्यं द्विजोत्तम ॥
मन्त्रोद्धार प्रवक्ष्यामि - मन्त्रमाहात्म्य मेव च
मन्त्रप्रयोग मनघ - सान्तत्र च्छृणु योगिराट् ॥
सारात्सारतरं मन्त्रं - पञ्च वक्त्रेषु पञ्च च
तन्मन्त्रं सारव क्ष्ये - मन्त्रोद्धार पुरस्सरम् ॥
वेदादि रुच्चरे त्पूर्वं - पाशबीज मनन्तरम्
वायुबीज मथोच्चार्य - प्राणेति तदनन्तरम् ॥
नन्दनाय पदंचोक्त्वा महच्छब्दं ततोच्चरेत्
वीरशब्दं ततोच्चार्य - वराय तदनन्तरम् ॥
सर्वशत्रु पदं चोक्त्वा - संहार पदमुच्चरेत्
कारिणे पदमुच्चार्य - रामदूताय चोच्चरेत् ॥
हुं फट् स्वाहेति चोच्चार्य - मन्त्रोऽय कपिवक्त्रतः
षट्त्रिंश दक्षरो मन्त्रो - षट्कर्म फलसाधनः ॥
द्वितीयं दक्षिणं वक्त्रं - नृसिंहाख्यं भयङ्करम्
तारपाशमयं बीजं - वायुबीजं ततोच्चरेत् ॥

नृसिंहबीज मुच्चार्य - अंकुशं बीज मुच्चरेत्
नमो भगवते पश्चात् - नृसिंहायेति चोच्चरेत् ॥
ज्वलत्कालानलेत्युक्त्वा - रूपायेति पदं ततः
सर्वराक्षस शब्दं च - चतुर्थ्यंतं विदारणम् ॥
सर्वत्र परिपूर्णाय - हुं फट् स्वाहेति चोच्चरेत्
पंच वक्त्रमनोर्मध्ये - द्वितीय वदनस्य तु
चतुश्चत्वारिंश दथ - मन्त्रोऽयं सर्वसिद्धिदः ॥
तृतीयं गारुडं वक्त्रं - मन्त्रं वक्ष्यामि सुव्रत
प्रणव पाशबीजं च - वायुबीज ततोच्चरेत् ॥
ततो नरमृगं बीजं - बीजं गारुड मेव च
उच्चरेदंकुश बीजं - नमश्शब्दं ततोच्चरेत् ॥
गारुडेति पदंचोक्त्वा - वदनाय पद वदेत्
महच्छब्दं ततोच्चार्य - वीर शब्दं ततोच्चरेत् ॥
वराय पदमुच्चार्य - वायुपुत्राय चोच्चरेत्
सर्वशब्दं ततोच्चार्य - विषकृन्तन उच्चरेत् ॥
विषंछिदि द्विरुच्चार्य - सीताशोक विनाशन
हुं फट् स्वाहा समायुक्तो - तृतीयं वदनात्मकम् ॥
पञ्चाशदुत्तरं त्रीणि - वर्णात्मक मिद मनुः
गारुडाननज विप्र - विषरोगादि नाशनम् ॥
चतुर्थं क्रोडवक्त्रं च - सर्वशत्रु निबर्हणम्
स्मरणात्सर्व पापघ्नं - वक्ष्यामि मुनिपुङ्गव ॥
तारं पाशं समुच्चार्य - वायुबीज मनन्तरम्
नृसिंह तार्क्ष्य बीजे च - वराह तदनन्तरम् ॥
अकुशं बीज मुच्चार्य - वराहवदनाय च
समस्तपद मुच्चार्य - नागलोकपदं पठेत् ॥

प्रकम्पन पदं चोक्त्वा - चतुर्थ्यन्तं प्रयत्नतः
वायु पुत्राय चोच्चार्य - सर्वशत्रुपदं ततः ॥
संहारकारिणे शब्दं - हुं फट् स्वाहा समन्वितम्
चतुर्थमन्त्रो ह्यनघ - सर्वसिद्धि प्रदायकः ॥
चत्वारिंश तथा पञ्च - वर्णमन्त्रः प्रकीर्तितः
मन्त्रोऽयं सौकरं वक्त्रं - महदैश्वर्य कारणम् ॥

पञ्चमं तु हयग्रीवं - मन्त्रं च श्रुणु योगिराट्
तारं पाशमय बीजं - वायुबीज मनन्तरम्
नृसिंहं गारुडं चैव - वाराहं तदनन्तरम् ॥

हयग्रीवं च बीजं च - अंकुशं बीज मुच्चरेत्
सर्ववेद पदंचोक्त्वा - मयाय पदमुच्चरेत् ॥
हयग्रीवं पदं चोक्त्वा - वदनाय ततोच्चरेत्
कपिशब्दं ततोच्चार्य - वीराय तदनन्तरम् ॥
हुं फट् स्वाहा समायुक्तो - हयास्य वदनो मनुः
त्रय स्त्रिंश द्वर्ण रूपो - मन्त्रोऽयं पञ्चमं मुने।

एवं पञ्चमनून् सम्य - गेकत्रैव जपेन्मुने
एकादशोत्तर शतद्वय वर्णात्मको ह्यसौ
परमन्त्रगणो जप्यो - एकदा सिद्धि कांक्षिणः ॥

मन्त्रांतरं प्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गव!
अष्टाक्षरो महामन्त्रो - पञ्चवक्त्र हनूमतः ॥
सर्वसिद्धिकरो मन्त्रो - दूर्वासोपासित पुरा
सारात्सारतरो मन्त्रो - सत्यं सत्यं न संशयः ॥
आदौ वानरबीजं च - तथा पश्चा न्नृसिंहकम्
तार्क्ष्य वाराह बीजे च - पञ्चमं तु हयाननम् ॥

प्रणवादि नमोन्तं च - मन्त्रोह्यष्टाक्षरो भवेत्
ब्रह्मा ऋषि श्च गायत्री - छन्द एव उदाहृतम् ॥
भीषणं पञ्चवक्त्राख्य - हनुमान् देवता मुने
बीजं तार मिति प्रोक्तं - शक्तिः पृथ्वीमयं तथा ॥
कीलकं तु हयग्रीव - बीजं त्रैलोक्य सुव्रत ॥
तारादि बीज षट्केन षडङ्गन्यास माचरेत्
ध्यानं यत्नात्प्रवक्ष्यामि - ध्यानं सर्वफलप्रदम्
विना येन न सिध्यन्ति - मन्त्रो वर्षशतैरपि ॥

ध्यानम् :-

श्लो॥ वन्दे वानर नारसिंह खगराट क्रोडाश्व वक्त्रांचितम्
नानालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा
अद्रि पाश त्रिशूल मुद्गर हलं खट्वाङ्ग सन्मुद्रिके
खड्गं खेटक मुन्नतं वरतुरङ्गोपेत सदीपितम् ॥
जपा दुपरतो ध्यायेत् - ध्यानादुपरतो जपेत्
परस्पराथ सम्बन्धं - जपध्यान मिदं द्वयम् ॥

ध्यानं विना जपो मन्त्री - न कुर्याच्च कदाचन
मन्त्रांतर प्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गव!
सर्वेषामपि मन्त्राणा - मयं श्रेष्ठतमो मनुः ॥

आदौ तारं समुच्चार्य - नमो भगवते पदम्
आञ्जनेयं द्वि रुच्चार्य - वीरशब्दं ततोच्चरेत् ॥
हनूमंत पदं पश्चात् - सकलेति पदं ततः
शत्रु संहरणायाथ - ह्रां ह्रीं ह्रूं इति संवदेत् ॥
हुं फट् स्वाहेति मन्त्रोऽय मुक्तोऽष्टत्रिंश दक्षरः
अयुतं तु पुरश्चर्या - तद्दशांशं तु भोजनम् ॥

त्रिमधूनि च संगृह्य - चरुणा गोघृतेन वा
न्यासं कृत्वा प्रयत्नेन - मूल मन्त्र त्रिधानतः
होमं कुर्या यथा शक्ति - सहस्रं शतमेव वा ।।
न कुर्याद्वित्तशाठ्यं तु - विश्वासेन विना मुने!
न कुर्या च्च परार्थं तु - देवता शाप माप्नुयात् ।।

-: बहिरन्तर मातृका न्यास विधान कथनम् :-

श्लो।। अन्यद्रहस्यं वक्ष्यामि - लोकानामुपकारकम्
अन्तर्मातृक विन्यास - प्रकारं कथितं बुधैः ।।
षट्चक्राणां च तत्वार्थं - दर्शनस्य तु पारगैः
पञ्चाश द्वर्ण बीजानि - नमोंतं बिंदुपूर्वकम् ।।
एकैक वर्णं विप्रेन्द्र - वक्ष्यते मन्त्रवेदिभिः
तत्वार्थं नाम योगीन्द्र - हंस स्सोहं मितीर्यते ।।
चतुर्दलेषु चाधारे - चतुर्वर्णा नथोच्चरेत्
हंस स्सोहं मिति ब्रूयात् - वसांते च पठे न्नरः ।।
गुह्ये षडश्री तत्वार्थं - बालमध्ये पठेत्पुमान्
दश द्वादश पत्रेषु - नाभि हृद्देश भागतः ।।
ढ फे क ठे च तत्वार्थं - वर्णे वर्णे च योजयेत्
कण्ठे षोडश पत्रेषु - स्वराणां षोडशस्वपि ।।
आदौ तत्वार्थ मुच्चार्यं - क्रियते मंत्रवेदिभिः
भ्रूमध्ये द्विदलं पद्मं - द्वौ वर्णा वुच्चरेद्बुधः ।।
हंस स्सोहं समुच्चार्य - वर्णे वर्णे च योजयेत्
एवं षट्चक्रपत्रेषु - हंस स्सोहं समुच्चरेत् ।।
सर्वेषा मेव मन्त्राणां - प्रकारं कथ्यते बुधैः
अन्यद्रहस्यं वक्ष्यामि - मैत्रेय मुनिपुङ्गव ।।

लघु प्राणप्रतिष्ठा च - वक्ष्यामि पुरुषर्षभ
मृण्मये चर लिंगे च - व्रताङ्गे देवतांतरे ॥
ध्यानं प्रतिष्ठामन्त्रं च - कुर्याच्छास्त्रानुसारतः ॥
कदाचि दपि नो कुर्या - द्धोमं ब्राह्मण भोजनम् ॥

इति श्री पराशर संहितायां श्री पराशर मैत्रेय संवादे
श्री हनुमत्पञ्चमुख मन्त्रविधि कथनं नाम
अष्टनवतितमः पटलः

# श्री पराशर संहिता

## *एकोनशततमः पटलः*

-: नित्यध्यान प्रकार कथनम् :-

श्री पराशरः :-

श्लो॥ अन्यद्रहस्यं वक्ष्यामि - लोकाना मुपकारकम्
मैत्रेय मुनिशार्दूल! - सावधानमनाः श्रुणु ॥

श्री मैत्रेयः :-

श्लो॥ श्रुतं रहस्य मखिलं - मंत्राणां श्रीहनूमतः
इदानीं श्रोतु मिच्छामि - ध्यानं सर्वार्थ साधनम् ॥

श्री पराशर :-

श्लो॥ अथ ध्यानं प्रवक्ष्यामि - राजराजेश्वराभिदम्
सावधानमना भूत्वा - श्रुणुष्व मुनिपुङ्गव
हेमरम्भावने रम्ये - कल्पवृक्ष गणान्विते
नवरत्न सुवर्णां च स्प्राकार परिवेष्टिते ॥

सुधालहरि कर्पूर - परिघा परिशोभिते
प्रवाललतिकाक्रांत - पारिजात तरोस्तले ॥
मुक्तावितान संयुक्ते - सुवर्ण मणिमण्डले
महास्तरण संयुक्त - रक्तवेदि निवेसिते ॥

रत्नपीठ सुखासीनं - सहस्र वनितावृतम्
कोटि कन्दर्प सङ्काशं - कांचनाचल सन्निभम् ॥
अनर्घमणि संराजत्कोटीरघटितेन्दिरम्
रत्नचदन पुण्ड्राढ्य - पूर्णेन्दु विलसन्मुखम् ॥

तिरस्कृत महाहीर - विलसद्दन्त पक्तिकम्
उद्यद्रविकरामृष्ट - विकसत्पङ्कजेक्षणम् ॥
चम्पक प्रसवाकार - नासापुट विराजितम्
चण्डभानु लसद्गण्ड - मण्डलांचित कुण्डलम् ॥

सिंहस्कन्धं दर भ्राजद्ग्रैवेयांचित कंधरम्
वृत्तहार लताराजत्कवाट पटु वक्षसम् ॥
चतुर्भुज वशाभास रम्भाफल लसत्करम्
सुवर्चला कुचासक्त - विन्यस्तैक कराम्बुजम् ॥

दुर्दांत भयकृत्फाल - करवाल वरायुधम्
कदलीकाण्ड संकाश - महोरु मुरुविक्रमम् ॥
काहली कांत्य कूपार - गर्वापहार जङ्घकम्
कालनेमि शिरोहारि मृदुलांघ्रि सरोरुहम् ॥
वज्र निष्ठुर चंद्रार्थ - रक्ताभ खर पत्र खम्
रामस्मरण संहृष्ट - स्वर्णवल्ली तनूरुहम् ॥
मदिरा पानव भ्रास - मत्त घूर्ण द्विलोचनम्
कर्पूर सौरभ भ्राज तांबूलापूरिताननम् ॥

हेमव्यजन हस्ताभ्यां - वीज्यमानं विलासिनम् ॥
दिव्यभूषण सम्पन्नं - स्वर्ण यज्ञोपवीतिनम् ॥
कुंकुमागरु कस्तूरी - चंदनाहेति चर्चितम्
धरणीतनयादत्त - मुक्ताहार विराजितम् ।
त्रयस्त्रिंशत्कोटि संख्यार्बुद रुद्रगणावृतम्
महावानर सङ्घात - सिद्ध गन्धर्व सेवितम् ॥
वीणावाद्य मिलद्गुण्ड क्रियागान विशारदम्
महोदरपति प्रख्य - महोष्ट्र वरवाहनम् ॥
कपिल ध्वजदत्तादि - महामुनिगणार्चितम्
सर्वसौन्दर्य निलयं - सर्वसौभाग्यदायकम् ॥
सर्वमंत्रमयात्मानं - साधकानां वरप्रदम्
ध्यायेद्देवं हनुमंतं - अन्तरङ्गे निरन्तरम् ॥
य इदं चिंतयेन्नित्यं - प्रातरुत्थाय मानवः
राजविद्वत्सभापूज्यः - सभवेत्सर्वदाभवेत् ॥
श्रिया कुबेर सदृशो - वाचागुरु समोभवेत्
इहलोकेसुखं प्राप्य - वैकुण्ठपदवान् भवेत् ॥
अन्यं विशेषं वक्ष्यामि - श्रृणुष्व मुनिपुङ्गव
चक्रस्य मध्यदेशेतु - देवं संस्थापयेन्नरः ॥
नित्यपूजा विधानस्य - क्रमं वक्ष्यामि सुव्रत
स्थावराणां च देवस्य - चक्रमध्येतु स्थापयेत् ॥
फलकामनया यन्त्रं - प्रत्येकं पूजयेद्बुधः
चक्रस्य द्वय मावश्यं - द्वार भूपुर संज्ञकम् ॥
भूपुरद्वारहीनं च - तच्चक्रं निष्फलं ध्रुवम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
नित्यध्यान प्रकारकथनं नाम एकोन शततमः पटलः

# श्री पराशर संहिता

## शततमः पटलः

### -: रहस्यत्रय कथनम् :-

श्री पराशरः :-

श्लो॥ रहस्य मन्त्रं वक्ष्यामि - श्रृणुष्व मुनिपुङ्गव!
चिंतामणिः कामधेनुः - कल्पवृक्ष इतीरिताः ॥
त्रयोपि हनुमन्मन्त्राः - सर्वकाम फलप्रदाः
रहस्यत्रय मित्युक्तं - एतदेव मनीषिभिः ॥
पुरासनत्कुमारेण - मुनिना ब्रह्मयोनिना
जप्त्वारहस्य त्रितयं - प्राप्ता सिद्धिर्गरीयसी ॥
मन्त्रत्रयी महद्गोप्यं - गुह्यं लोकोपकारकम्
मन्त्रोद्धारं प्रवक्ष्यामि - सावधान मनाश्रुणु ॥
तारमायारमानङ्ग - बीजान्यादौ समुच्चरेत्
रमां शक्ति तथोच्चार्य - ततो मदनबीजकम् ॥
अनङ्ग शक्ति लक्ष्मी च - बीजत्रय मथोच्चरेत्
रमाशक्त्यास्तथो बीजे - पुनर्मन्मथ बीजकम् ॥
तारं गगन बीजं च - ततो हनुमते पदम्
नमश्शब्दं ततोच्चार्य - मन्त्रमेवं प्रपूरयेत् ॥
चिंतामणि रियं विद्या - एकविंशति वर्णिका
ऋषि ब्रह्मा च मन्त्रस्य - गायत्री छन्द उच्यते ॥
तारमाया रमानङ्गैः - बीजंतु समुदाहृतम्
नमश्शक्तिः कीलकंतु - रमा मायं च मन्मथः ॥
चिंतामणिः श्री हनूम - त्प्रसादे विनियोजयेत्
न्यासमस्य प्रवक्ष्यामि - सावधानमनाः श्रुणु ॥

तारमायारमानङ्गैः - अंगुष्ठ न्यासमाचरेत्
लक्ष्मीमाया मन्मथैस्तु - तर्जनीन्यासमाचरेत् ॥
अनङ्गमाया लक्ष्मीभिर्मध्यमा न्यासमेवच
रमां मायां मन्मथं च - अनामिकयां न्यसेद्बुधः ॥
व्योमबीजं ततोच्चार्य - ततो हनुमते पदम्
कनिष्ठिकयां न्यसेद्विद्वान् - हृदय करपृष्ठयोः
एवंच हृदयन्यास - प्रकारः कथ्यते बुधैः ॥

ध्यानम् :-

श्लो॥ भास्वत्कोटि दिवाकराभ ममलं चन्द्रार्थ खण्डोज्वलत्
शीर्षं सर्वजगत्पतिं परतनुं भर्गं वरेण्यं महः
ध्यायामो हनुमन्त मादिपुरुषं वर्गत्रयार्थाप्तये
कल्याणाचलवासिनं सुरगुरुं ब्रह्मादि वन्द्यंहरिम् ॥

ग्रन्थांतरे ध्यानम् :-

श्लो॥ चिंतितार्थ प्रदातारं - चन्द्रखण्डावतंसकम्
चिंतामणि हनूमन्तं - चिरं हृदि विभावयेत् ॥
कामधेनुरिति ख्यातं - हनुमन्मंत्र मुत्तमम्
ब्रह्मर्षिरिति विख्याता - गायत्री छंद उच्यते ॥
बीजमाकाश बीजं च - नमः शक्ति रुदाहृता
तथैव हं हनुमते - कीलकं समुदाहृतम् ॥
कामधेनु हनूमत्प्रसादे च विनियोजयेत्
न्यासद्वये प्रयत्नेन - हकारं बिंदुपुर्वकम्
षड्दीर्घैः संयतं ब्रह्मन् - न्यास कृत्वा विधानतः ॥
आदौ प्रणवमुच्चार्य - लक्ष्मी बीज मनन्तरम्
प्रणवं व्योम बीजं च - ततो हनुमते पदम् ॥

नमश्शब्दं ततोच्चार्य - मन्त्रमेय महामुने
दशाक्षरी महाविद्या - मन्त्राणा मुत्तमोत्तमम् ॥

ध्यानम् :-

श्लो॥ कामधेनु हनूमन्तं - कामितार्थ प्रदं भजे
कल्पवृक्ष इतिख्यातो - हनुमन्मन्त्र मुत्तमम्
मन्त्रोद्धारं प्रवक्ष्यामि - मन्त्रमाहात्म्यमेवच ॥
आदौ तारं समुच्चार्य - मायाबीज मनन्तरम्
पुनः प्रणवमुच्चार्य - व्योमबीज मनन्तरम् ॥
ततो हनुमते पश्चात् - नमः शब्दं ततोच्चरेत्
दशाक्षरीरियं विद्या - सकलैश्वर्यदायिनी ॥
छन्दोन्यासं ऋषिश्चैव - बीजं शक्ति च कीलकम्
कामधेनु मनोरेव - कुर्यादत्र महामुने ॥

ध्यानम् :

श्लो॥ कमनीय सुवर्णाभं - करोद्यत वराभयम्
कल्पवृक्ष हनूमन्तं - कल्पयेत् करुणानिधिम् ॥
इत्थं ध्यात्वामनु वरान् - सहस्रं शतमेववा
अभिमृष्यजलं मौनिः - समाराध्यगुरून् हृदि ॥
चरणं चिंतयेद्धीमान् वृथाकालं न यापयेत्
नैवामतिः कुतर्केण - व्यर्थनीया कदाचन ॥
नैतद्विद्या समालोक - विद्यास्ते मुनिपुङ्गव ।
नैतत्तुल्य मभिध्यानं - नैतत्तुल्योस्ति वै जपः ॥
वैकुण्ठ पदमासाद्य - पुनरावर्ततेनसः
स वै वैकुण्ठ पदत्रान् - भवत्येव न संशयः ॥
एतद्रहस्यं चितयं - ना भक्ताय कुबुद्धये
असूयकाय नोदेयं - दद्याच्चेद्गुरुघातकः ॥

नसप्तकोटि मंत्राश्च - सिध्यन्त्यस्य दुरात्मनः
विनीताय सुशिष्याय - श्रद्धायुक्ताय धीमते ।।
परीक्ष्य वर्षत्रितयं - देयं गोप्यं प्रयत्नतः
महामहेश्वर स्सोयं - सूर्यं चन्द्रानलश्च सः ।।
हनुमान् सपुरश्चर्या - रहस्यस्याह्यपेक्षते
नाराधनं वा किंत्वस्य - जपमेव ह्य पेक्षते ।।
जपस्ते सर्वकल्याण फलदो भवति ध्रुवम्
अखण्डित महासिद्धि - दायकस्यमहात्मनः
रहस्यस्य समाविद्या - नास्ति नास्ति जगत्त्रये ।।
इदं रहस्य माहात्म्य - मापस्तम्बाय धीमते
भक्तियुक्ताय शिष्याय - ह्युशनाः पूर्वमब्रवीत् ।।
एतद्रहस्य परमं - ब्रह्मणोपि सुदुर्लभम्
चिंतामणिः कल्पवृक्षः - कामधेनुश्चवै त्रयः ।।
सुदुर्लभं मनुष्याणां - सत्यं सत्यं शिवोदितम्
राजराजेश्वरी स्याहुः - एतद्विद्यात्रयंबुधः ।।
एतद्गुह्यतमं लोके - पुत्राय प्राणदाय वा
सार्वभौमाय राज्ञेवा - शिरोदात्रे रिवापुनः ।।
मनसा ज्ञानतो वाऽपि न कदाचित् प्रकाशयेत्
यदि प्रकाशयन्मोहात् - मृत्युमाप्नोति वै हठात् ।।
परीक्षिताय शिष्याय - देयं नान्यस्य कस्यचित्
तस्मात्सर्व प्रयत्नेन - गोप्यमेव न संशयः ।।
रात्रौ समस्त मन्त्राणां - जपकर्म प्रशस्यते
सौरमन्त्रं विनासर्वे - जपाद्रात्रौ फलाधिकाः ।।

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
रहस्यत्रय कथनं नाम शततम: पटलः

# श्री पराशर संहिता

## एकशततमः पटलः

-: कृष्णागरु विग्रह पञ्चाक्षरी द्वादशाक्षरी प्रभाव कथन

श्री पराशरः :-

श्लो॥ अन्यद्रहस्यं वक्ष्यामि - गोप्यं लोकोपकारकम्
सुलभोपाय सिध्यर्थं - वक्ष्येहं मुनिपुङ्गव ॥
षठ्कर्म साधनं नृणां - सर्वकाम फलप्रदम्
गुरु विश्वास हीनाय - कृतघ्ना यातिलोभिने ॥
भक्तिश्रद्धा विहीनाय - भित्रघ्ने पापकर्मणे
न वक्तव्यं न वक्तव्यं - बञ्चकाय दुरात्मने ॥
शङ्करेण पुरा प्रोक्तं - पार्वत्यै हितकाम्यया
कृष्णागरु तरोः काष्ठं - चित्तायां चैत्रमासके ॥
तत्काष्ठं पूजयेत्पक्षं - मन्त्रेणानेन योगिराट्
वैशाखे तु विशाखायां - शिल्पागम विशारदम् ॥
सर्वचिंता विहीनं तु - प्रार्थयित्वा तु कारयेत्
पूर्वोक्त ध्यानमार्गेण - प्रादेश प्रतिमां मुने ॥
स्पष्ट बालाधरोष्ठं च - कटिसूत्रं च मेखलां
कौपीनं ब्रह्मसूत्र च - सर्वाभरण संयुतम् ॥
कृत्वा त न्निशकाले तु प्राणस्थापन माचरेत्
पुन दंश निशायां तु - प्राणस्थापन माचरेत् ॥
पाठान्तरे –

श्लो॥ पृष्ठ ताल्वधरोष्ठं च - शिर श्श्रवण नासिका
हस्त पाद सुजङ्घां च - सर्वावयव शोभितम् ॥

कौपीन ब्रह्मसूत्रं च - उत्तरीया ह्यलंकृतम्
कृत्वा तं निशिकाले तु - प्राणस्थापन माचरेत् ॥
तेन कृत्येन योगींद्र - भवेत्सोपि सजीवक
पूजये च्च तदारभ्य - पञ्चवक्त्र हनूमतः ॥
अष्टोत्तर शतावृत्या - मनुना मार्जयेद्बुधः
तद्गृहे भूतभेताल - भैरवाश्चैव राक्षसाः ॥
दूरादेव पलायन्ते - तद्ग्राम प्रान्त वर्जिताः
य यं वापि स्मरेत् चित्ते - तं त माप्नोत्यसंशयः ॥
अत्यन्त शुभ्रा नमलान् - अव्रणान् शालि तण्डुलान्
हरिद्रावर्ण संयुक्तान् - समादाय प्रयत्नतः ॥
एकैकं मनु मुच्चार्य - हनुमन्मूर्ध्नि निक्षिपेत्
सहस्रं शांतिकार्येषु - निशि भार्गव वासरे ॥
वश्यकार्येषु ता नेव - ह्यक्षतां गुरुवासरे
सहस्र द्वितयं चैव - स्तम्भनेंगारवासरे ॥
विद्वेषणे चैव तद्व - त्तद्वासर महानिशि
त्रिसहस्रं गुरौ रात्रौ - हरिद्राक्षत एव च ॥
तद्व द्भौमदिने रात्रौ - पूजयेत्प्रणतो नरः
स्तम्भने सर्वजन्तूनां - सत्यं सत्यं महामुने ॥
तद्व द्भौमदिने रात्रौ - नग्नस्यैवतु पूजयेत्
मृकण्डु तनयो वापि - नगच्छे द्यममन्दिरम् ॥
एतदुक्त प्रकारेण - पूजयेच्च प्रयत्नतः
अधश्शायी ब्रह्मचर्यं - प्रांत सम्यक्समाचरेत् ॥
वांछितं च भवेत्सिद्धिः मासार्थेन भवेद्ध्रुवम्
एतत्प्रयोग मनघ - न वक्तव्यं कदाचन ॥

एवं चाक्षत पूजाभिः - षट्कर्माणि च साधयेत्
एतद्गुह्यतरं विप्र - न दद्यात्तामसाय च ॥
तत्तत्प्रयोग रूपेण - पाप निर्हरणाय च
ब्राह्मणान्भोजयेद्धीमान् कार्यलाघव गौरवात् ॥
प्रयोगं जपमात्रेण - कर्तु मिच्छति ये नराः
निक्कालं नैव जानाति - तस्य सिद्धि र्नजायते ॥
तस्मात्सर्व प्रयत्नेन - ज्ञातव्यं सिद्धिकांक्षिणा
अथातः संप्रवक्ष्यामि - गोप्यं लोकोपकारकम् ॥
कपि कोशातकी मूलं - भौमरात्रौ समाहरेत्
पूजयेत्सप्तरात्रं तु - करवीरैः सु पावनैः ॥
पुन र्भौमदिने रात्रौ - वेष्टये दर्क तन्तुना
वेष्टये न्निशिकाले तु - वज्र क्षीरं च लेपयेत् ॥
पुनर्लिप्य पुनर्वेष्ट्य - सप्तवारमयंक्रमात्
एव मेवार्कजक्षीरैः - लेपनं तन्तु वेष्टनम् ॥
तं पूजये दहोरात्रौ - स्वर्णपत्रेण वेष्टयेत्
हस्ते धृत्वा जपेदस्त्रं - अयुतं निशि साधकः ॥
तन्मूलिकांगुलौ धार्य - सिद्धयोगी मुनीश्वर
खड्गायुधेन संताड्य - अभेद्योभवति ध्रुवम् ॥
रणाङ्गणे शत्रुमध्ये - शस्त्रास्त्रस्य समूहयोः
सञ्चरेद्गुलिका योगा - त्कदलीवन मध्यवत् ॥
आश्चर्यदं महायोगिन् - कलासाधक याद्भुतः
खड्गस्तम्भ मिदं देयं - पुत्रायतु महामुने ॥
गोपये त्सर्वदा विप्र - गुप्ता वीर्यवती भवेत्
प्रयाणान्त महायोगी - षड्रसोपेत मादरात् ॥

सहस्रसंख्या विप्राणां - सतांबूलै स्सदक्षिणैः
देवता तोषणं विप्र - भोजनाद्ब्राह्मणस्य च ॥
मध्येचांते तदादौ च - कार्यलाघव गौरवात्
आचार्यं पूजयेद्विद्वान् - वस्त्रालङ्करणादिभिः ॥
न कुर्याद्वित्तशाठ्यं तु - निश्चयेन विना मुने
न कुर्या च्च परार्थं तु - देवताशाप माप्नुयात् ॥
अन्यं विशेषं वक्ष्यामि - श्रुणु मैत्रेय! तत्त्वतः
पञ्चवक्त्र हनूमाख्य - मष्टाक्षर मिदं मनुः ॥
सुगमा सर्वथा देव - सुराणा मर्चितं सदा
रंजितेन सुवर्णेन - ताम्रेणापि विशेषतः ॥
भूर्जे वा तालपत्रे वा - मन्त्र मेत त्कुलेश्वरि!
लिखित्वा वर्ण मनघ - धारये च्च प्रयत्नतः ॥
पञ्चोपचारा नर्पये च्च - रक्षा भवति मातृवत्
अन्यद्विशेषं वक्ष्यामि - लोकाना मुपकारकम् ॥
अखण्ड बिल्वपत्राणि - निशि नित्य सहस्रकम्
त्रि मध्वक्तं जुहुयात् - मण्डलत्रय मेवच ॥
कुबेर सदृशो भूत्वा - मोदते सम्पदाशिभिः
खर्जूरं त्रिशतं हुत्वा - ह्यष्टरात्रं तु योगिराट् ॥
अयत्नतोऽपि विप्रेन्द्र - ऐश्वर्यं शाश्वतं ध्रुवम्
मधूकपुष्प मनघ - सहस्रं जुहुया न्निशि ॥
दिवा क्षीरेण संतर्प्यं - एवं मण्डल माचरेत्
दरिद्रो वाथ दौर्भाग्यो - लक्ष्मीवान् जायते ध्रुवम् ॥
द्राक्षाफलै राज्ययुक्तं - त्रिशतं च हुने न्निशि
राजवश्य मवाप्नोति - मासार्थं वा न संशयः ॥

रवौ श्वेतवर्चां देव - संग्रहे च्च वचाष्टकम्
मन्त्रितं सप्तधा विप्र - साधये च्च दिने दिने ॥
अष्टाक्षरी महामन्त्रो - पञ्चवक्त्र हनूमतः
प्रात गुंञ्जाप्रमाणं तु - बृध्यायेकोत्तरान्नरः ॥
अश्रुत वेदशास्त्राणां - व्याख्याता भवति धृवम्
प्रयोगानन्तरं वक्ष्ये - श्रुणुष्व मुनिपुङ्गव ॥
आदौ चांते जपे द्विद्वान् - पञ्चवारं जपेद्बुधः
साध्य नामं सङ्कल्मध्ये - निधायाष्टोत्तरं शतम् ॥
जपेद्द्वादश रात्रं तु - शृङ्खलावन्ध मुक्तये
यथाधिकारं प्रजपे - दथ वा मुनिपुङ्गव ॥
षट्सहस्रं सहस्रं वा - त्रिशतं शत मेव वा
शतान्यायु न कुर्वीत - स्वस्थस्स न कदाचन ॥
आपदुद्धारक स्तोत्र - मध्येऽनुष्ठे द्वयं जपेत्
अयमेव महामन्त्रो - चतुष्षष्ट्यक्षर स्मृतः ॥
साध्यनाम मनुष्यस्य - पञ्चवक्त्र हनूमतः
अष्टाक्षरीं लिखेत्पत्रे - दिने दिने स्पृशन्जपेत् ॥
दिने दिने सहस्रं तु - ह्यष्टोत्तर शतं तु वा
एवं प्रकारं जप्त्वा थ - मासं मासार्थं मेव वा ॥
दशांशं तर्पये द्विद्वान् - दद्दशांशं हुनेद्व्रती
भोजयेत्तद्दशांशंतु - यथा शक्त्या समाहितः ॥
धारयेद्गुलिकीकृत्य - रणेशस्त्रास्त्र वर्जितः
सर्वापद्भ्यो विमुच्येत - सत्यं सत्यं शिवोदितम् ॥
अथातः संप्रवक्ष्यामि - श्रुणु मैत्रेय तत्वतः
शनित्रयोदशी रात्रौ - व्रत कुर्यां द्विचक्षणः ॥

प्रदोपकाले संप्राप्ते - सप्त मन्त्रात्मिको मनुः
अष्टोत्तरशतं हुत्वा - अपूपा नर्पयेत्सुधीः ॥ ५
यथाशक्तिर्ब्राह्मणांश्च - भोजये दथ सिद्धये
एवं प्रकारं कृत्वातु - सर्वसम्पत्प्रदायकम् ॥ ५
मन्त्रांतरं प्रवक्ष्यामि - पञ्चाक्षर द्वयं मुने ॥ ६

अस्य श्री पञ्चाक्षरी महामन्त्रस्य श्रीरामचन्द्र ऋषिः। जगत च्छन्दः। महावीरो हनुमान् देवता। मारुतात्मज इति बीजं। अञ्जन सूनुरिति शक्तिः। रामभक्ति इति प्राणः। ओं रामलक्ष्मणानन्दकः ह्रां ह्रीं ह्रूं जितः मारुतात्मज। ह्रौ बीजेन नाभौ अञ्जनासूनुरिति स्फें इति शक्तये नमः। आधारे, मम सर्वदा नाना विधेप्सित, कार्य सिध्यर्थे सर्वदेहाङ्ग रक्षणार्थें जपे विनियोगः इति देहन्यासः। ततः अंगुलीन्यासः ॥ ६१

ओं श्री हनुमते नमः - अंगुष्ठाभ्यां नमः। ओं श्री रामदूताय स्फें तर्जनीभ्यां नमः। ओं लक्ष्मण प्राणदात्रे ध्रचं-मध्यमाभ्यां नमः। ओं अञ्जना सूनवे स्त्रौं - अनामिकाभ्यां नमः। ओं सीताशोक विनाशकाय - कनिष्ठिकाभ्यां नमः। ओं लङ्का प्रासाद भञ्जनाय ह्स्रौं करतल करपृष्ठाभ्यां नमः [एवं हृदयादिन्यासः ॥] ६२

मनोजवं मारुततुल्यवेगं - जितेन्द्रियं बुद्धिमतां वरिष्ठम्
वातात्मजं वानरयूथमुख्यं-श्री रामदूतं शिरसा नमामि ॥ ६३
मनुः - ओं ह्रीं स्फें ह्रूं ख्रूं ह्रौं
इति पञ्चाक्षरोऽयं मन्त्रः। ६४
द्वादशाक्षर महाविद्यां - वक्ष्यामि मुनिपुङ्गव!
समस्त मन्त्रजालानां - अयं श्रेष्ठतरो मनुः ॥ ६५

व।। अस्य श्री द्वादशाक्षरी महामन्त्रस्य श्रीरामचन्द्रऋषिः। जगती महावीरो हनुमान् देवता। मारुतात्मज इति बीजं। अञ्जनासू शक्तिः। वायुपुत्रेति कीलकं। मम श्री हनुमत्प्रसाद सिध्यः विनियोगः। मूलमंत्रेण करशुद्धि न्यासं हृदयादि न्यासंकुर्यात्

ध्यानम् :-

श्लो।। ध्याये द्बालदिवाकर द्युति धिभं देवारि दर्पावहम्
देवेन्द्र प्रमुख प्रशस्त यशसं देदीप्यमानं रुचा
सुग्रीवादि समस्त वानरयुतं सुव्यक्ततत्त्वप्रियम्
संरक्तारुणलोचनं पवनज पीताम्बरालंकृतम् ।।
मनुः :- ओं ह्रां ह्रीं ह्रूं ह्रः श्री हनुमते नम
पुनर्मन्त्रांतरं वक्ष्ये - द्वादशाक्षर संज्ञिकम्
न्यासध्याने पूर्व वच्च - मन्त्र मात्रं पृथङ्मुने।
मनुः - ओं ह्र हनुमते रामभक्ताय नमः ।।

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
कृष्णागरु विग्रह पञ्चाक्षरी द्वादशाक्षरी प्रभाव
कथन नाम एकशततमः पटलः

❀ * ❀

# श्री पराशर संहिता

## *द्विशततमः पटलः*

-ः जप विधान कथनम् :-

श्री पराशरः :

श्लो।। अथात स्संप्रवक्ष्यामि - जपस्थानानि वै मुने!
गृहे जपं समं विध्या - द्गोष्ठे शतगुणं भवेत्
पुण्येऽरण्ये तथाऽरामे - सहस्र गुणकं विदुः ।।
अयुतं पर्वते पुण्ये - नद्यां लक्ष मुदाहृतं
कोटि देवालये प्राहुः - अनन्तं शिवसन्निधौ ।।

सूर्यस्याग्नेः गुरो रिन्दोः - देवस्य च जलस्य च
विप्राणां च गवां चैव - सन्निधौ शस्यते जपम् ॥
शङ्खाश्च मणयः श्रीदाः - स्फटिका मोक्षदायिनी
पद्माक्षा पुष्टि रक्षीणः - रुद्राक्षा भुक्ति मुक्तिदाः ॥
पुत्रजीव्यैर्भवेत्पुत्रः - वसुधान्य समृद्धिदः
ते विद्रुमा वश्य धनाः - सौभाग्यार्थी श्च मौक्तिकाः
पापक्षया कुशमया - कामदा सर्वरोग्यजा
तत्पूर्वाभिमुखे वश्यं - दक्षिणे चाभिचारकम् ॥
पश्चिमे धन विद्यायाः - उत्तरे शांति कर्मसु
आग्नेय्यां काम्यकं चैव - नैऋत्यां द्वेषणं तथा ॥
वायु रुच्चाटने चैव - ईशान्ये मोक्षसम्भवः ॥

ग्रन्थान्तरे अन्तरिक्ष स्तुतिः ।

श्री पराशरः :—

श्लो॥ स्तोत्रान्तरं प्रवक्ष्यामि - सर्वसिद्धिप्रदायकं
श्रृणुष्व मुनिशार्दूल - सर्वलोकोपकारकम् ॥
पुरा हनुमतातात - रामकार्य उपस्थितौ
सीतावलोकनार्थाय - लंघ्यमाने महोदधौ ॥
अन्तरिक्षगतावाणी - सन्तुष्ठावशरीरिणी
त मेवं स्तोत्रराजं च - वक्ष्यामि हित काम्यया ॥

## स्तोत्राष्टकम्

श्लो॥ सर्वमाङ्गल्य नादै - रमरपति पुरावीर शङ्का नितांतं
सातङ्का यस्य लङ्कागमन समयतो वीरवीर स्वजाता
दुष्टांश्चक्रे पलाया मखिलजन मनः कल्पना कल्पवृक्ष
रक्षो विक्षोभहेतुः प्रथयतु स महः पाद निर्भावनिर्वः

रक्षो वीरान्तकारी कपिबल मतुलं मेलयित्वा य आगात्
रामं वीराभिराम बिरहित सुतनुं त्विष्टकृद्दिष्टपानां
सीतायानप्रवेदी प्लवग सुर नर व्रातकोटीरकोटी
कोटी नीराजिताङ्घ्रिः सकपि पविगूढः पातु नः पावमानिः

खर्वाखर्वाङ्गयष्टि प्रथित पृथु महागायया मायया यं
कालेकालेऽस्तुतो यः परमति यतिभि र्लोकपाली कपाली
येनायेनातिचक्रं क्षिति रपि चकृता भीरगारे रगारेः
दद्या दद्यास शाखामृग मकुटमणी भारथी भारथी वंः ॥

सुग्रीवेऽग्रजीवे विरतिरतिमती भ्रान्तनेत्रे सुनेत्रे
सौमित्रे शक्तिभिन्नौ गत मुदि कुमुदं प्यङ्गदे रङ्गदेहे
रामे संय द्विरामे भव विरहहरामौषधि चोनुनेतु
ते नेयातेन येना भुविभुविनि विभामारुते न श्रियं नः ॥

तन्वन्वोनल्प तन्वादलित रिपुबलं विग्रहे भूरि साक्षा
दीक्षागारे मरुद्भिः कृत नतिनुतिभि विश्वरूप स्वरूपः
वेशतोद्भूत गन्ध दधदिव विदितं प्राणिनां द्रोणमद्रि
संग्रामुद्रावतारः प्रभवतु भवतां भूतये भूतसान्द्रः

मध्येकर्ण विलीने नियति रवयता राममुद्रे समुद्रे
नाना श्वासावरुद्धे मरुति नयनरुङ् निष्कृते व्रश्चविबे
वेल्लत्पुच्छे प्रगुच्छे त्रिजग दभिज्वल ज्जृम्भणा द्रागपाया
त्पाया द्वे रुद्रमूर्ते रतुलित विभव वैभवं पादमानेः ॥

हिंस्रं रक्षोबलं य द्विलय मुपगतं वीक्षणादेव यस्य
त्रस्यन्तो भूत्कृतेभ्यो दितिदनु तनुजा नष्टचेष्टां प्रविष्टाः
दौष्टय चा ह्वानमात्राद्भु वि न वितनुते दुष्टजन्तुर्जिनेतुः
नेता लोकस्य सोव्यात्स्मृति पद विधतोभूरि सामीरणिर्वः ।

पद्मां पद्माभिधासो शुचिचरित धृतं सन्ततं चाशु तेभ्यो
दत्ते ज्याया सदायुर्निज यतुरुचिरं पावमानः शुभानि
भक्त्या प्रीत्या परं ये सुविहित मनसः पावनं पावनान
स्तोत्रं प्रातः पठंति प्रथित मिदमिह श्लोकमुख्याष्टकाख्यं

स्तोत्रान्तरं प्रवक्ष्यामि गोप्यं त्रैलोक्यपावनं
पञ्चरत्न मितिख्यातं स्तोत्राणा मुत्तमोत्तमम् ॥

—: पञ्चरत्न स्तोत्रा :—

श्लो॥ अव्यादञ्जन मञ्जना नयनयोः प्राभंजनः प्राभवं
शाब्दं चन्द्रचोक्षि शाश्वतपदं नीतेर्निवास श्शियः
उत्तीर्याब्धिमुदीक्ष्य मैथिलसुता मुन्मथ्य रक्ष श्श्रमू
मुद्दीप्यारिपुरी मुदीरित कथो भर्तुर्हनूमान् हरिः ॥

अष्टैश्वर्य दिवाकरोदय गिरी शांतेर्निवासं स्थली
जीवातुर्जनकाधिराज दुहितुः जैत्रः कवीनां कथं
रक्षः पुङ्गव गर्व पर्वत पवी काकुत्स्थ जन्योत्सव
प्रारब्धांबुज भानुमान् सुहनुमान् उन्मेषयोत्सेमुषिः ॥

येनाधायनमुत्स मुच्छ्रित महाश्रृङ्गो महेन्द्राचलः
कुल्याकारि सरित्पतिः कुरुपुरी पैशाचरी प्रेतभूः
सुग्रीव श्च कृतः कृतः प्रतिकृती स्वात्माय शस्तम्भताः
नीतो दाशरथे श्चिराय हनुमान् पायादपायाज्जगत् ॥

जात्यन्धाय जगत्प्ररोचक रतिप्राणेश नृत्तेक्षणे
पञ्चभ्राति जिघृक्षितार्कपर तुष्टाभीष्टद ब्रह्मणे
उत्तीर्णाय महार्णवं रघुपतेः पुण्यावतीर्णायगात्
पारावार मपार मस्तु हनुमन्नाम्ने तुहिम्ने नमः ॥

अथक्रांति रतिबरन्निधिषु फामसावि त्यलं
क्षडूर्मिमधु दन्वतस्तरे तरिप्रयुक्ता नुतिः
हनूमति तनूमति द्युतिमतां गुणानां गणे
नमः पद समर्पणा दधिक मस्ति कं तर्पणम् ॥

सीताशोक तरोरशोक वनिकोद्यानस्य चोन्मर्दन
स्त्वानीतौषधिगोत्र जीवित सगोत्रस्बास्य दीर्घायुषः
येष्यत्पद्मभुवस्मत्ते हंनुमतस्या देकमोकश्रियं
एत त्पञ्चक पावकः क्षविपतत्सं धुक्षितो बन्धुभिः ॥

अथातः संप्रवक्ष्यामि स्तोत्रं त्रैलोक्य पावनं
सर्वपापहरं नृणां वक्ष्यामि मुनिपुङ्गव!

-: स्तोत्रम् :-

श्लो॥ यच्छेनेन्द्रपदं न वा हरिपदं न प्रार्थये शाम्भवं
नैवादित्यपदं न वा वसु पद नैव ध्रुवस्यापि तत्
नैव ब्रह्मपदं न वा मुनिपदं सर्वेप्सितार्थप्रदं
त्व त्पादाब्जयुगे वृणे स्थिरतरां भक्ति हनूमन्नहम् ॥

नाहं सत्यवचः कदापि कलये नाहं तपोदुश्चरं
कुर्वेका भपि देहि ना मुपकृति नाह करो म्यादरात्
नान्यद्दैव मह भजे क्व च सतां संगं न जाने सदा
ता न्यङ्गास्यपनोद्य रक्ष हनुमन् त्वं मां त्वदेकाश्रयम् ॥

स्वांतं मे परदार वित्त निरतं ध्याने न लग्नं तर
श्रोत्रादिद्रिय पञ्चकं कु विषयासक्तं कथादौ नते
प्रीतिस्वस्वसुतादि केष्वित न भवन्मूर्तौ हनूमस्तथा
प्येवं तां निखिलात्म कोसि तदिदं सर्वं त्वयि प्रेक्षितां ॥

मूढास्त्वां हनुमन्वदंति कपिभि स्तुल्यं कपिः किङ्करं
जानामि त्वहमव्ययं निरुपमं लोकैकनाथं विभुं
एवं त्वां मनसिस्मरंत मधुना वोपेक्षतेचे द्भवान्
सर्वो मां प्रहसिष्यतीति य दिदं त्वय्येन नूनं भवेत् ।
वीर श्री हनुमान् त्वदीय महिमालोक अतेत्यद्भुतं
त्वन्माया रचितंच विश्वमखिलं मिथ्यैव संपत्प्रभाक्
ब्रह्मं वेति सदा बृहस्पति मुखैर्देवैस्सदा गीयसे
त्वत्पादाम्बुज सेवनं हितकरं भूयान्महा प्रायसः ।।
विश्वासोनहि मेस्तिवीर हनुमन् त्वय्याञ्जनेय प्रभो
दम्भाचार विजृम्भणा च्च हनुमन्भक्तोय मित्यादृतः ।।
एवं मा मपराधिनं करुणया त्रातुं समर्थोभवान्
त्वत्तोन्यं न भजामि देव मधुना त्वां सर्वसेव्यं भजे ।।
वायु प्राणसुतं वरेण्य मनघ श्री वानराधीश्वरं
वाल्मीक्यादि महामुनीन्द्र विनुतं विद्यादिनीतं विभुम्
रामप्रीति विवर्धनं रणजयं रक्षोधिपस्यादिदम्
सुग्रीवादियुतं सुमङ्गल तनुं सुव्यक्त तत्वं भजे ।।
केचिद्गान कलाविदः श्रुतिपराः केचित्कवित्वाश्रयाः
केचिच्छास्त्र पुराणबद्धरुचयः केचित्प्रभुत्व गताः
केचित्तन्महिमावकाश रहितोप्यद्याखिलज्ञा स्म्यहम्
त्वामाश्रित्य जगत्पतिं कुशलदं श्रीमन्हनूमत्प्रभो ।
धर्मार्थी यदि वा भवामि यदिवादंचार्थवे वाध्यतः
भूत्यर्थी यदि वा श्रयामि भवतो मूर्तिं त्रिमूर्त्यात्मिकां
मद्भक्तोय मिति प्रसन्न सुखद श्री वायुपुत्रप्रभो
त्वत्तोहं नपरं भजामि विबुधं मां रक्ष रक्षान्वहम् ।।
नमः कुमुददानव प्रवर सर्वगर्वोच्चल
त्कुलाचल पतीभवन्निज भुजद्वयशालिनी

रघूत्तम मसंश्रित श्रुतिपुटि सुधामाधुरी
धुरीण मृदुवादिने हृदि हनूमते धीमते ॥

वामे जानुनि वामजानुमपरं ज्ञानाख्य मुद्रान्वितम्
हृद्देशे कलयन्नुतो मुनिगणै रध्यात्म दत्तेक्षणः
आसीनः कदलीवने मणिमये बालार्क कोटिप्रभाः
ध्यायन्ब्रह्मपरं करोतु मनसा शुद्धि हनूमन्मम ॥

ख्यातः श्रीरामदूतः पवन तनुभवः पिङ्गलाक्ष प्रभावात्
सीताशोकापहर्ता दशमुख विजयी लक्ष्मण प्राणदाता
आनीता भौषधात्रिर्लवणजलनिधिलंङ्घनाविष्वमोयो
वीररसश्री हरूमान्मम मनसि कृतां कार्य सिद्धि विदध्या।

सर्वाम्नायनुत प्रभावसकलं पाणीशितः पावने
सर्वादित्य वसुप्रभूसति शिवः श्रीपेन्द्रमूर्ते प्रभो!
सर्वेषां प्रवदति दांभिक इति स्वस्यक्षदाशांतये
त्वत्पादाब्जानितांत बद्ध हृदयन्तस्माद वर्णावव ॥

स्वामिन्पालय मा मनन्यशरणं मोपेक्षतां मानसे
मत्वा सावपराधयुक्त यिति ते भक्तेऽपराधः कृतः
सत्य व्यागसितेपराधिनि जने रक्षा न साधारणा
सातु श्री हनुमन्निरागसि जने स्वाभाविकी सम्मता ॥

दीनं मां परिकल्प्य पूर्व मथ च त्वद्दीनरक्षाबल
प्राकट्याय सुरासुरायादिति वांछास्ति मत्पालने
तत्पादाब्ज धनं सदा धृतवतः स्वांते कुतो निर्भयं
हे वातात्मज रक्षरक्ष सततं दोषान् निवार्य प्रभो!

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
अन्तरिक्षस्तुति प्रकारकथनं नाम द्व्यधिकशततमः पटलः

# श्री पराशर संहिता

## त्र्याधिकशततमः पटलः

### -: भीषण हनुमन्त उग्रहनुमन्माला मन्त्र प्रभाव कथनम् :-

पराशरः :-

।। मन्त्रांतरं प्रवक्ष्यामि - भीषणाख्य हनूमतः
भालामन्त्रं महाप्राज्ञ - सावधान मना श्रुणु ।

। ओं अस्यश्री भीषण हनुमन्माला मन्त्रस्य शौनकऋषिः । अति जगत
च्छन्दः । भीषण हनुमान् देवता । मम इष्टकाम्यार्थ सिध्यर्थें भीष
हनुमन्माला प्रसाद सिध्यर्थे जपे विनियोगः ।।

। ओं भूः ओं नमो भगवते वीर विक्रम हनुमते अंगुष्ठाभ्यां नमः ।
ओं भुवः ओं नमो भगवते प्रचण्ड हनुमते - तर्जनीभ्यां नमः ।
ओगँ सुवः ओं नमो भगवते रौद्र हनुमते- मध्यमाभ्यां नमः ।
ओं महः ओं नमो भगवते आवेश हनुमते - अनामिकाभ्यां नमः ।
ओं जनः ओं नमो भगवते अञ्जनापुत्र हनुमते - कनिष्ठिकाभ्यां न:
ओं तपः ओगं सत्य ओं नमो भगवते रौद्रहनुमते उच्चाटन हनु
करतलकरपृष्ठाभ्यां नमः । [एवं हृदयादि न्यासः]

ानम् :

ो।। अमल कनक वर्ण - प्रज्वलत्पावकाक्षं
सरसिज निभवक्त्रं - सर्वदा सुप्रसन्नम् ।
पटुतर धन गात्रं - कुण्डलालंकृतांगं
रण जयकरवालं - रामदूतं नमामि ।।

-: माला मन्त्रम् :-

ओं नमो भगवते तत्प्रकट पराक्रमाकान्त सकल दिङ्मण्डल यः
तान धवलीकृत जगत्त्रितयाय वज्रदेह रुद्रावतार लङ्कापुरी दहन उ
न्धन दशग्रीवकृतान्तक सीतासमाश्वासन वायुपुत्र अञ्जनागर्भ स
दय भास्कर बिम्बानल भक्ष्य हरि हर ब्रह्म देव राक्षस ऋषिगण समस्त

य द्वात्रिंशदायुधधर पाशुपत ब्रह्मास्त्र निवारणाय अग्निवायु अथर्वण राहार वायुवेग मनोवेग स्थलजलाग्नि मम्मनोभेदि परमन्त्रयंत्र तन्: दय छेदय आममन्त्रयन्त्र तन्त्रान् प्रकटय प्रकटय सुग्रीव सन्धानक नादि ब्रह्मचारिन् दिगम्बर सर्वपाप विनाशन सर्वज्वरोच्चाटन डाकि ध्वंसिनी ओं नमो भगवते तेजोहि तेजोहि एहि एहि श्रवणज भूत किनी डाकिनीनां सर्वविषं नाशय नाशय उलूक उरग विषं निर्विषं रु खेटखेट मथमथ छिदिछिदि मारय मारय शोषय शोषय ज्वाः ालय प्रहारय प्रहारय मायां भेदय भेदय मायां छेदय छेदय ओं ह्रीं मो भगवते निर्धाटय निर्धाटय भूतज्वर, महेश्वरज्वर, वैष्णवज्व ातुर्दिक ज्वर, यक्ष, राक्षस, ब्रह्मराक्षस, कालपाश, महानागकुल, ऐरा र्कोटक, अनन्त, वासुकी, कालिदी, पद्म, कुमुद, दिवाचर, रत्रिचर, सर्व विषं कुरुकुरु झडपि कडपि ओं ह्रीं ओं नमो भगवते राचभयं चोर शमनाय परमन्त्र, परयन्त्र, परतन्त्रान् छेदय छेदय स्वमन्त्र, स्वय त्रतन्त्र, स्वविद्यान् प्रकटय प्रकटय सर्वशत्रून् विनाशय विनाशय षर ोभय क्षोभय सर्वकार्याणि मे साधय साधय असाध्यं मे साधय सा ों हुं फट् स्वाहा ॥

्रो॥ भीषणस्य हनूमंत - माला मंत्राक्षराणिवं
द्विषष्ट्युत्तर मेतद्धि - मुने पञ्च शतानि च ॥
मन्त्रान्तरं प्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गव!

॥ अस्य श्री उग्रहनुमन्माला मन्त्रस्य रुद्रऋषिः । दैवी गायत्री छ श्री उग्रहनुमान् देवता । मम उग्रहनुमत्प्रसाद सिध्यर्थे जपे वि योगः ।

॥ ह्रां अंगुष्ठाभ्यो नमः । ह्रीं तर्जनीभ्यां नमः । ह्रूं मध्यमाभ्यां ह्रैं अनामिकाभ्यां नमः । ह्रौ कनिष्ठिकाभ्यां नमः । ह्रः । कर करपृष्टाभ्यां नम।। [एवं हृदयादि न्यासः]

यानम् :-

्रो॥ कनत्कुण्डलं काञ्चनाकार मीड्यं
रणे भीमं रक्षोगणाध्यक्ष शिक्षं

जनानन्द हे त्वञ्जना नन्दनं तं
हनूमंत मत्यन्त शूरं नमामि।

न्थान्तरे ध्यानम् :-

श्लो।। ध्यायेद्बालदिवाकर द्युति निभं देवारि दर्पविहम्
लङ्कादाहक नज्रदेह सुभगं त्रैलोक्य विस्तारकम्
ब्रह्मानन्द जितेंद्रिय पशुपतेः प्रज्ञावतारं दश
ग्रीवाशासुतनाशकं कपिकुल श्रेष्ठं हनूमत्प्रभुम् ।।

-: मालामंत्रम् :-

ओं नमो भगवते उग्रहनुमन् वायुपुत्र अञ्जनागर्भसम्भूत सीता
त्रनाशन लक्ष्मण प्राणदात सर्वग्रह विनाशन ऐकाहिक, द्वयाहिक, त्या
ातुर्थिक, पञ्चाह्निक, षष्ठ, सप्तमज्वर, अष्टमज्वर, नवमज्वर दशमज
तज्वर, विषनज्वर, शीतज्वर, तापज्वरान् छेदय छेदय छिंदि ि
दयभेदन छिंदि छिंद रर रर अङ्गशूल शिरोव्याधि अक्षशूल गुल्म
त्तशूल ब्रह्मराक्षसकुल महानागकुल विष निर्विष कुरुकुरु झटपि झटपि
ों ह्लूं फट् स्वाहा । ओं नमो भगवते सर्वपापग्रहोच्चाटनाय निगला
मोचनाय सर्वकार्याणि साधय साधय उग्रहनुमान् वानरमुख त्राहि त्र
पदुष्टिपुटं चरावरं पथिरे हनूमंत राजा ।।

ो।। मालामंत्रस्य वर्णास्तु - श्रीमदुग्रहनूमतः
षडुत्तराणि पञ्चाश - द्विशत पारकीर्तिताः ।।

इति श्री पराशर संहितायां पराशर मैत्रेय सवादे
भीषण हनुमंत उग्रहनुमन्माला प्रभाव
कथन नाम त्र्याधिकशततमः पटलः

# श्री पराशर संहिता

## चतुरधिकशततमः पटलः

### -ः प्रसूति विषय माला मन्त्र कथनम् ः-

ी पराशरः :-

्लो।। मन्त्रान्तरं प्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गव !
सर्वलोकोपकाराय - सावधानमनाश्शृणु ।।

।।। अस्यश्री प्रसूतिविषयहनुमन्माला मंत्रस्य कालाग्नि रुद्रऋषिः। अनुष्
छन्दः । श्री हनुमान् देवता । ओं बीजं । अञ्जनी सूनुरिति शक्ति
हहह कीलकं । मम इष्टकाम्यार्थ सिध्यर्थे जपे विनियोगः ।।

श्रीराम दूतायनमः । अंगुष्ठाभ्यां नमः । वायुपुत्राय नमः तर्जनी
नमः । अञ्जनीगर्भ सम्भूताय नमः मध्यमाभ्यां नमः । पर्वतोर
नाय नमः अनामिकाभ्यां नमः । सुग्रीव संधानाय नमः कनि
काभ्यां नमः । लङ्कापुरी दाहकाय नमः करतलकर पृष्ठाभ्यां नम

[एवं हृदयादि न्यासः]

यानम् :

्लो।। स्फटिकाभं स्वर्ण कांति - द्विभुजाभ्यां कृताञ्जलिम्
कुण्डलद्वय संशोभि - मुखांभोज महं भजे ।।

नुः :—

ओं वेदमय ओं नमो भगवते तत्प्रकट पराक्रमाक्रांत सकल दिङ्म
शोवितान धवलीकृत जगत्त्रितयाय वज्रदेह रुद्रावतार लङ्कापुरी द
दधि बन्धन दशग्रीव कृतांतक सीतासमाश्वासन अञ्जनागर्भ सम
ाराम लक्ष्मणानन्दकर कपिसैन्य प्राकार सुग्रीव सन्धानकर पर्वतोत्पा
ायुपुत्र कुमार ब्रह्मचारिन् गम्भीरशब्द सर्वपापग्रह बिनाशन सर्व

छेदन वेदमय ओं नमो भगवते बंह्व बंह्व एह्येहि श्रवणजभूतानां शाकि
ाकिनीनां सर्वविषं छेदय छेदय मथ मथ खेदय खेदय भेदय भेदय मा
ारय शोषय शोषय ज्वालय ज्वालय प्रहरय प्रहरय ओं ह्रीं ओं नमो भग
ाहमण्डल भूतमण्डल प्रेतमण्डल पिशाचमण्डलान्निर्धाटय निर्घाटय भूतज्व
ीतज्वर, चातुर्थिकज्वर, माहेश्वरज्वर, ब्रह्मराक्षसज्वर, कालपाश, म
ागकुल विषं निर्विष निर्विष झडपि झडपि ओं नमो भगवते हनुमते ह
हान् उच्चाटय हुं फट् स्वाहा । ओं नमो भगवते परबलं क्षोभय क्षो
ाम सर्वकार्याणि साधय साधय परमंत्र, परयन्त्र, परतन्त्रान् छेदय छे
ावमंत्रं स्वयत्र, स्वविद्यान् प्रकटय प्रकटय ओं नमों हनुमते अमृतोः
ार्भिणी ताप हारिणे शीघ्रं प्रसूतिं कुरु कुरु हुं फट् स्वाहा । ओं न
भगवते पार्श्वनाभाय फणींद्र पद्मावती सहिताय शीघ्रं प्रसूतिं कुरु
फट् स्वाहा ॥

श्लो॥ प्रसूति विषये माला - मन्त्र वर्णाः चतुश्शतम
ततस्ते नवति संख्या - कथिता मन्त्र वेदिभिः ॥
मन्त्रान्तरं प्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गव ।
सर्वोपद्रव नाशाय - गोप्यं लोकोपकारकम् ॥

व॥ अस्य श्री सर्वोपद्रव नाशन हनुमन्माला मन्त्रस्य ब्रह्मा ऋषिः। गाय
छन्दः। श्री हनुमान् देवता। मारुतात्मज इति बीजं । अञ्जनासूनुरि
शक्तिः । वायुपुत्र इति कीलकं । मम श्री हनुमत्प्रसाद सिध्यर्थे
विनियोगः । मूलमन्त्रेण करशुद्धि व्यापक न्यासं कुर्यात् ॥

ध्यानम् :

श्लो॥ मूर्धन्यां केशपाशं मणिमय मकुटं चारुनासं दधानम्
रक्तास्यं, पिङ्गलाक्षं, कनकमणिलसत्कुण्डलं यज्ञसूत्रम्
उद्बाहुश्चन्द्र वर्णं प्रकरमणि रुचं कण्ठदेशे कराब्जम्
मौंजी कौपीन बालं पवन सुत महं दीर्घपादं नमामि ॥

सूर्यकोटि प्रतीकाशं - कुण्डलद्वय मण्डितं
वामहस्तेन यं शैलं - दक्षिणाभिन्न श्रृङ्खलम् ॥ १०
राज्यप्रदं हनूमन्तं - ददास्य मधुरत्रयं
श्रीशं चिंतामणिं - कामधेनु कल्पक माश्रये ॥ ११

ओं नमो भगवते वज्रवीर हनुमन्त कुमार वानरराज महाबल पराक्रमाय श्रीरामचन्द्र पादकमलाराधनाय वज्रमणि रत्नमेखलाय। कटितटिसूत्र केयूर कङ्कणभूषित विराजिताय। बालब्रह्मचारिणे। एहि एहि। आगम आगम। क्रों ह्रीं आं पगड सर्वोपद्रव महामय निवारणाय त्रासय त्रासय। हनुमान्। दह दह। पच पच। छेदय छेदय। मारय मारय। मम रक्षां कुरु कुरु। पापसङ्घान् चूर्णय चूर्णय। महादारुणस्तनु छेदय छेदय। शोषय शोषय। ह्रां ह्रीं ह्रू ह्रैं ह्रौं ह्रः आं क्रों कपिवराय स्वाहा ॥ १२

सर्वोपद्रव नाशाय - हनुमन्मंत्र वर्णकाः
कथिता मन्त्रधिद्भिस्तु - षडुत्तर शतद्वयम् ॥ १३
महारोग प्रशमनं - सर्वोपद्रवनाशकम्
सर्व सपत्करं गोप्यं - ऋषिभिः परिकीर्तितम् ॥ १४
अस्ययन्त्रं प्रवक्ष्यामि - श्रुणुष्व मुनि पुङ्गव!
आदौ त्रिकोण मालिख्य - शक्ति बीज ततोन्यसेत् ॥ १५
तद्बहिर्वृत्तमालिख्य - षट्कोणं च लिखेद्बहिः
षट्कोणेषु समालिख्य - शक्तिबीज न्यसेद्बुधः ॥ १६
तद्बहिर्वृत्त मालिख्य - बहिरष्टदलं न्यसेत्
आं नमः सुदर्शना - येत्यष्ट पत्रेषु लेखयेत् ॥ १७
तद्बहिर्वृत्तमालिख्य - पुनरष्टदलं लिखेत्
सहस्रार हुं फट् ओं श्री - पत्रे पत्रेषु लेखयेत् ॥ १८

तद्बहिर्वृत्तमालिख्य - षोडशाब्जं ततो लिखेत्
ओं श्री रामेति वर्णानां - चतुरावृत्ति मात्रतः
पत्रे पत्रे लिखेद्विद्वान् - षोडशाब्जे लिखेद्बुधः ॥

पुनर्वर्तुलमालिख्य - चतुष्षष्टि दलान् ततः
मालामंत्राक्षराण्यत्र - पत्रे पत्रे च लेखयेत् ॥

अवशिष्ट मंत्रवर्णान् - दलसन्धिषु लेखयेत्
तद्बहिर्वृत्तमालिख्य - भूपुरद्वय मालिखेत् ॥

चतुर्द्वार समायुक्तं - लेखयेच्च प्रयत्नतः
भूपुरान्तर्लिखेद्विद्वान् - अङ्कुषट्कं न्यसेद्बुधः ॥

अचक्राय विचक्राय - सुचक्राय ततःपरम्
ज्वाला चक्रं ततः कुर्यात् - महाचक्रायतोद्भवेत् ॥

त्रैलोक्यचक्रायेतिपदं - वह्निजायां समुच्चरेत्
षडंगैः सहसम्बन्धः - स्वाहाशब्दस्य कीर्तितः ॥

प्राणप्रतिष्ठां कुर्यात्तु - प्रत्यहं पूजयेत् जनः
पुनर्मन्त्रांतरं वक्ष्ये - सावधानमनाश्शृणु ॥
समस्त मंत्रजालानां - जपादावुच्चरेद्बुधः
समस्त जप सिध्यर्थं - प्रत्यहं जपतो मुनेः
आदौ सप्तदशावारं - पठेद्विघ्न तिरस्कृतिम् ॥

आदौ तारं समुच्चार्य - त्रां श्रीं त्रूं तु समुच्चरेत्
सर्वविघ्नपदंब्रूयात् - तिरस्कार पदं ततः ॥
सर्वोपद्रव शब्दं च - तिरस्कार पदं ततः
कुरु द्वं द्वं समुच्चार्य - सर्व विघ्नपदं ततः ॥
हर द्वद्वं समुच्चार्य - शीघ्रं चेति पदं वदेत्
अभीष्टदेवतां पश्चात् - बोधयेति द्विरुच्यते ॥

वह्निजायां समुच्चार्य - त्रिपञ्चाशत्शुभाक्षराः
अन्यं विशेषं वक्ष्यामि - अक्षमाला विधानतः ॥

जपादौ उच्चरेद्धीमान् - पञ्चवार मतंद्रितः
जपमालां गृहीत्वाथ - जपं कुर्वीत मांत्रिकः ॥

मन्त्रसिद्धिस्तु तस्यैव - सहस्र गुणितं भवेत्
तत्पुरुषायोच्चरे दादौ - विद्महेति पदं ततः
महापुरुषायततो - धीमहीति पदं ततः ॥

तन्नोशब्दं समुच्चार्य - जपमालापदं ततः
प्रचोदयात्पदं पश्चात् - इति पूर्वैरुदाहृतम् ॥

जपमालाख्य गायत्री - षड्विंशदक्षरास्मृता ॥

अथातस्संप्रवक्ष्यामि - श्रुण मैत्रेय तत्त्वतः
मन्त्रोपदेशक गुरौ - मृतेच दिवसांतरे
त्रिदिनं सूतकं विद्यात् - शिष्यस्य नियमो मतः ॥

देशांतरेपि शिष्यस्य - श्रवणं च विशेषतः
त्रिदिनं सूकंत कुर्यात् - तद्विधिं तातबोऽब्रवीत् ॥

उत्सवेषु च सर्वेषु - पूजनीयोपि देशिकः
वर्षे वर्षे मृतदिनं - दद्याद्भक्त्यनुसारतः
ब्राह्मणाय सुशीलाय - भोजनं प्रीति संयुतम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
प्रसूति विषय मालामन्त्र कथनं नाम
चतुरधिक शततमः पटलः

## श्री पराशर संहिता

### पञ्चोत्तरशततमः पटलः

-: शृङ्खलाबन्धमोचन मालामन्त्र कथनम् :-

शर। :—

मन्त्रांतरं प्रवक्ष्यामि - पाश बन्ध विमुक्तये
शृणु मैत्रेय विप्रेन्द्र! - सर्वलोकोपकारकम् ॥

अस्यश्री पाशबन्ध विमोचन हनुमन्मन्त्रस्य ब्रह्माऋषिः। गाय छन्दः। श्री हनुमान् देवता। ओं बीजं। स्वाहा शक्तिः। श्रीं कीलः मइष्ट काम्यार्थ सिध्यर्थे जपे विनियोगः। मूलमन्त्रेण कर शु कुर्यात् ॥

:-

ख्यातः श्रीरामदूतः पवनतनुभवः पिङ्गलाक्षशिखावान्
सीताशोकापहर्ता दशमुख विजयी लक्ष्मण प्राणदाता
आनीता भेषजाद्रेर्लवण जलनिधेर्लङ्घनाविष्टतोये
वीरस्स श्री हनूमान् मम मनसिकृतां कार्यसिद्धिं विदध्यात्

ों श्रीं ओं नमो हनुमते। सर्वपापग्रह विनाशन। सर्वग्रहोच्चाटन ाकिनी विध्वंसन। ओं श्रीं ह्रीं ओं नमो भगवते। आह आह। ए ्हि श्रवणजभूतानां। शाकिनी डाकिनीनां। विषम विषय दुष्टाः र्वेषा माकाशवासिनां मथमथ। छिदछिद छेदय छेदय भेदय भेदय ारय मारय। शोषय शोषय ज्वालय ज्वालय। प्रहरय प्रहरय ों ह्रीं ओं नमो भगवते। श्री हनुमते ग्रहमण्डल भूतमण्डल प्रे ण्डल पिशाच मण्डल निर्मूलयमान। भूतज्वर चातुर्थिक ज्व वैष्णुज्वर, माहेश्वरज्वरान् छिंदि छिंदि। भिंदि भिंदि। प्रहर ्रहरय। ब्रह्मराक्षस कालपाश, महानागकुलस्य निर्विष निर्विष

झडपि झडि। हां हीं हूं फट् स्वाहा। ओं ह्रीं ओं नमो भगव
श्री हनुमते दुष्टग्रहोच्चाटनाय परबलं क्षोभय क्षोभय। सर्वकार्याणि
मे साधय साधय। मम बन्धनं मोचय मोचय। कुरुकुरु हुं फट्
स्वाहा॥

। पाशबन्ध विमुक्त्यर्थं - हनुमन्मालिकामनुः
वर्णानां त्रिशतं प्रोक्तं - द्वादशाक्षर संज्ञकाः॥ ५
मन्त्रांतरं प्रवक्ष्यामि - श्रणुष्व मुनिपुङ्गव
श्रृङ्खलाबन्धमुक्त्यर्थं - गोप्यं लोकोपकारकम्॥ ६
सारात्सारतमं मन्त्रं - भुक्तिमुक्ति फलप्रदम्
सर्वेषामेव मन्त्राणा - मयं श्रेष्ठतरो मनुः॥ ७

अस्यश्री श्रृंखलाबंधविमोचन हनुमन्मन्त्रस्य। ईश्वर ऋषिः। त्रिष्टु-
प्छन्दः कालाग्नि रुद्रवीर हनुमान् देवता। ओं बीजं।स्वाहा शक्तिः।
ह्रीं कीलकं। मम सर्वाभीष्ट सिद्ध्यर्थं जपे विनियोग.॥ ८
मूलमंत्रेण करशुद्धि व्यापक न्यासं कुर्यात्॥

म् :-
ख्यातः श्रीरामदूतः (इति पूर्ववत्)
:-
"ओं श्रीराम लक्ष्मण मनोहारिणे सीताशोक विनाशिने
श्री हनुमते स्वाहा" ९

अस्यमन्त्रस्य योगीन्द्र! वर्णानां सप्तविंशतिः
सर्वसंपत्प्रदं नृणां - सर्वोपद्रव नाशनम्॥ १०

न्यासं ध्यानं पूर्ववदेव।

—

ओं नमो हनुमते। तत्प्रकट पराक्रमाक्रान्त सकल दिङ्मण्डल यशो
वितान धवलीकृत जगत्त्रितयाय। वज्रदेह रुद्रावतार लङ्कापुरी

दहन। उदधिबन्धन। दशग्रीवकृतांतक। सीतासमाश्वासन। अञ्जन गर्भसम्भूत। श्रीराम लक्ष्मणानन्दकर। कपिसैन्य प्राकार। सुग्री सन्धानकरण। पर्वतोत्पाटनाय। सर्व रोग विष नाशनाय। परमः तन्त्र यन्त्र भेदन। सर्व स्त्रीपुरुष कम्पित दशाय। शत्रुशिरच्छेदः ओं ह्रीं ह्रां सौं एहि एहि। वीर हनुमते। परबल प्रभञ्जनाय प्रतिभट शिरच्छेदनाय। शरणागत रक्षणाय। सर्वकार्याणि मे सर्व साधनाय। हुं फट् स्वाहा॥ ओं नमो हनुमते महावीर पराक्रम एहि एहि। आगच्छ आगच्छ। मम बंधनं मोचय मोचय। कुरु। मोक्षय मोक्षय। त्राहि त्राहि। हनुमते स्वाहा॥

॥ ओं हरि मर्कट मर्कट मन्त्रमिदं
यदि लिख्यति लिख्यति भूमितले
परि मार्जति मार्जति बामकरे
प्रविनश्यति नश्यति शत्रुकुलं
यदि मुञ्चति मुञ्चति शृङ्खलिकाम्॥

अस्यमन्त्रस्य वर्णानि - पञ्चाशीति शतद्वयम्
महारोग प्रशमनं - सर्वोपद्रव नाशनम्
सर्वसंपत्प्रदं गोप्यं - शृङ्खलाबन्ध मोचनम्॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
शृङ्खलाबन्ध विमोचनमाला मन्त्र कथन
नाम पञ्चोत्तर शततमः पटलः

# श्री पराशर संहिता

## षड्ुत्तरशततमः पटलः

### -: त्रयोदशाक्षरी प्रभाव कथनम् :-

श्री पराशरः :

श्लो॥ अन्यं विशेषं वक्ष्यामि - गोप्यं लोकोपकारकम्
मन्त्रविद्या सुविषये - श्रुणुष्व मुनिपुङ्गव!
सर्वेषामपि मन्त्राणां - मन्त्रान्ते पल्लवास्मृताः
केषांचिन्मन्त्र विद्याना - मादावन्ते च पल्लवाः ॥
तत्रापि कतिचिन्मन्त्राः - आदि पल्लव संयुताः
जानीहि तान् महामन्त्रान् - मुने! श्रेष्ठतमान् भुवि ॥
संप्रत्युदाहरिष्यामि - मन्त्रानादिग पल्लवान्
श्रुणुष्व मुनिशार्दूल - तदेकायत्त मानसः ॥
शैव पञ्चाक्षरी विद्या - शीघ्रं सिद्धि प्रदायिनी
श्रीमतो वासुदेवस्य - विख्याता द्वादशाक्षरी ॥
अष्टाक्षरी महाविद्या - सूर्यनारायण प्रभो ॥
त्रयोदशाक्षरी विद्या - आञ्जनेय महाप्रभोः
येते पञ्च महा मन्त्राः - आदिपल्लव सयुताः ॥
त्रयोदशाक्षरी तुल्या - विद्यानस्ति जगत्त्रये
सर्व विश्वकरी विद्या - सदा विजयकारिणी ॥
तद्विद्या लक्षणं - वक्ष्ये श्रुणुष्व मुनिपुङ्गव!
आदौ प्रणव मुच्चार्य - नमो भगवते पदम् ॥
स्याद्वायुनन्दनायेति - मन्त्रमेत्रं प्रपूरयेत्
त्रयोदशाक्षरी विद्या - देव दानव दुर्लभा ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य - बृहती छन्द उच्यते
हनुमान् देवता प्रोक्ता - प्रणवं बीज मुच्चरेत् ।।
वायुनन्दनाय पदं - शक्तिरित्युच्यते बुधैः
नमः कीलक मुच्चार्य - प्रसादे विनियोजनम् ।।
न्यासं कृत्वा प्रयत्नेन - मूलमंत्र विधानतः
लक्षमेकं पुरश्चर्या - दशांशं तर्पणं स्मृतम् ।।
दद्शांशं हुनेत्पश्चात् - तद्शांशं तु भोजनम्
एवं कृते पुरश्चर्या - विधौ सिद्धिर्भवे न्नृणाम् ।।
ध्यानं यत्त त्प्रवक्ष्यामि - ध्यानं सर्वफलप्रदम्
ध्यानं विना जपेन्मंत्रं - न सिध्यति जगत्रये ।।

ध्यानम् :-

श्लो।। पिङ्गाक्षं रक्तवदनं - दीर्घवालेन शोभितम्
एवं ध्याये हनूमन्तं - सर्वं कामार्थं सिद्धये ।।

ग्रन्थान्तरे :

श्लो।। सहस्र वाजि रथिन - सहस्र भुज धारिणम्
उष्ट्रवाहन मत्युग्रं - हनूमंत महंभजे ।।
अथ यन्त्रं प्रवक्ष्यामि - सर्वकामार्थ सिद्धये
श्रेष्ठाच्छ्रेष्ठतरं यन्तं - त्रिपुलोकेषु दुर्लभम् ।।
आदौ चन्द्र समालिख्य - त्रिकोण लेखयेत्ततः
ततो वृत्तद्वयं लेख्यं - द्वादशाब्ज ततो लिखेत् ।।
तद्बहिर्वृत्त मालिख्य - सुन्दरंच प्रयत्नत।
भूपुरद्वय मालिख्य - चतुर्द्वार समन्वितम् ।।
प्रणवं विलिखेन्मध्ये - सर्वदेव मयात्मकम्
माया श्री कामराजं च - त्रिकोणेषु समालिखेत् ।।

लिखेद्द्वादश पत्रेषु - मूलमंत्राक्षराणि वै
भूपुराणां तथा मध्ये - लेखयेच्च प्रयत्नतः ॥
अनुष्टुभं लिखेद्विद्वान् - आञ्जनेय महाप्रभो
प्राणप्रतिष्ठां कुर्वीत - प्रत्यहं पूजयेद्बुधः ॥
गुरुं सम्पूजयेद्विद्वान् - गृह्णीया च्चक्र मुत्तमम्
इतिहासं प्रवक्ष्यामि - श्रणुष्व मुनि पुङ्गव !
पुराकृत युगे धर्मे - मांधातेति प्रकीर्तितः
राजा परम धर्मज्ञः - गुरुपूजा परायणः ॥
सह्पंत्रार्थ तत्वज्ञः - सदाचार समन्वितः
त्रिपुलोकेषु विख्यातां - गुरुराख्यां पुरीं शुभाम् ॥
अध्यास्त समहाराजो - यथा शक्रोऽमरावतीम्
तत्र पुर्यां निवसति - कुशोत्तम इति द्विजः ॥
सर्वशास्त्रार्थ तत्वज्ञः - वेदवेदाङ्ग पारगः
सत्यवादी सदा मौनी - हनूमद्भक्तशेखरः ॥
नदीतीरे निवसति - पूजां कुर्वन् हनूमतः
बहुकालं निनायाशु - हनुमत्कृपयामुने !
अथांतरे महाप्राज्ञो - दयार्द्र मनसा युतः
आविर्भभूव हनुमान् - भक्तस्य निकटं गतः ॥
हेमाङ्गद किरीटिनं - कनकयज्ञ सूत्राङ्कितं
मणिस्फुरित हारिणं - सकल भक्त संरक्षणम् ॥
सहस्र युवतीयुतं हृदि - सुवर्चला नायकं
ददर्श मुनिरग्रतो - सकललोक सञ्चारिणम् ॥
ततस्सुविस्मितो भूत्वा - सुप्तोत्थित इवद्विजः
साष्टाङ्गं प्रणतो भूत्वा - पञ्चधारं कुशोत्तमः
स्तोत्रैर्नानाविधै स्सद्यः - तुष्टाव प्रयताञ्जलिः ॥

नित्यानन्दमयं सदाशिवतनुं भक्ताश्रयं पावनं
रक्ताम्भोरुह संविकाशवदनं हेमांबरालंकृतं
शूरं किन्नर सिद्ध चारण गणैः संस्तूयमानं सदा
विश्वव्यापिन मीश्वरं सुरगुरुं - वन्दे हनूमत्प्रभुम् ॥
श्रीदं षण्मुख धारिणं - शतमुख प्रध्वंस कालांतकं
भीमाकार सुदंष्ट्र वज्र सदृशं नागारि गर्वापहं
सृष्टि स्थान लयादिकारण तनुं ब्रह्मादि संसेवितं
ध्यायेऽष्टादश नेत्र भास्वर महः भीमाग्रजं वायुजम् ॥
सीताशोक विनाशकाय शुभदायानन्द चिद्रूपिणे
श्रीरामानुज जीवदायक पयोगान प्रिये स्वात्मने
मुष्ट्याघात विघूर्णिता सुरपति प्रस्तूयमानस्त्रिये
तस्मै सर्वजगत्पते हनुमते देवाय तुभ्यं नमः ॥
शौचमूल मिदं ब्राह्मं धनमूल मिदं जगत्
नृपंतु गृहिणी मूलं - हनुम न्मूलकं जगत् ॥
आनंदेन समंदानं - भ्रातृ मातृ समो हितः
हनूमता समो देवो - नास्ति नास्ति जगत्त्रये ॥
अहं हनूमत्पदवाच्य दैवं भजामि सानंद मनोविहङ्गः
तदस्यदैवं नकदाचि देवं ब्रह्मादि भूयोऽपि न फालनेत्र
अश्वमेधः व्रतश्रेष्ठः - ज्योति श्श्रेष्ठो दिवाकरः
द्विपदां ब्राह्मणश्श्रेष्ठः - देवश्रेष्ठस्तु मारुतिः ॥
सुपीत कौपीन समुज्वलोल्लसत्
मौञ्जी मनोज्ञाजिन पीत वासं
सुकुण्डलं लम्ब शिखा बलाढ्यं
तमाञ्जनेयं शरणं प्रपद्ये ॥

गलावलग्न लग्नोद्यद्घचङ्क्रमण चेगितं
शत्रुसङ्घ महाराव - भीषणं तं नमाम्यहम् ॥
अयोग्यः पुरुषोनास्ति - आयुरन्नं प्रयच्छति
एत दर्थं दयाधीन - हनुमंत मुपास्महे ॥
इतिस्तुतस्स हनुमान् - सर्वभूत दयापरः
अमूल्यरत्न खचितां - मालां तद्ब्राह्मणे ददौ ॥
इमं वृत्तांत माकर्ण्य - मान्धाता चारगोचरः
द्विज माजारया मास - तत्क्षणाद्ब्राह्मणोत्तमम् ॥
तमागतं मुनिं दृष्ट्वा - मान्धाता वाक्यमब्रवीत्
कुशोत्तम! त्वयादेयं - मह्यं मालिकोत्तमम् ॥
यथेष्टं तव दास्यामि - धनधान्यादिकं बहु
तच्छ्रुत्वा प्राह विप्रेंद्रः - नृपं मालाभिलाषिणम् ॥
न देया मालिका राजन् - दत्ता हनुमता यतः
नोत्सहे दातुमेनां वै - तदाज्ञा चेत्प्रदीयते ॥
वदन्त मेनं विप्रेन्द्रं - मन्धाता नृपसत्तमः
इयेष बाधितुं विप्रं - पूर्व पापवशानुगः ॥

द्रक्ष्यामि पुण्यं स्फुटपिङ्गलाक्षं
रक्ताम्बुजस्येति मुखं हनूमतः
विचित्र रत्नोज्वल हेमकुण्डल
स्फुरत्यहेयं ममदक्षिणो भुजः ॥

ततः प्रादुर्भव त्सद्यः - भक्तस्य निकटं गतः
एतस्मिन्नन्तरे देवो - हनूमान्भक्त वत्सलः ॥

असहन्भक्त दुःखानि - राजदुर्वृत्त दुर्मनाः
नृप निर्मूलनार्थाय - प्रेषयामास मारुतम् ॥

सगत्वा सर्वगो वायुः - तत्पुरस्थं नराधिपं
महा वात्यातनुर्भूत्वा - तृण पूल मिवाम्बुधिम् ॥

नीरबांतः पातयामास - वेष्टमान मिवोरगम् ॥

सपातितस्तेन महाबलेन
महाबुधौ मग्नतनुर्नृपालः
द्विजावमानस्य फलं तदेतत्
सम्प्राप्त मूर्छः सहसा ममार ॥

इत्थं पित्रा मारयित्वा नृपालं
सद्यो विप्रंतोषयित्वा हनूमान्
दत्वा चास्मै सर्वकामान् कपीन्द्रः
एवं तस्मात् प्राप्त हासः प्रतस्थे ॥

तदा प्रभृति विप्रेन्द्रः - कुशोत्तम महातपाः
त्रयोदशाक्षरी विद्या - प्रभावेन जिताखिलः ॥

पुत्रैः पौत्रैश्च सहितः - भुक्त्वाभोगान् यथेप्सितान्
अन्ते हनुमतो लोके - जगाम परमा मुदा ॥

त्रयोदशार्णस्य मनोर्हनूमतः
विवेचितं तत्तमशेष मव्ययं ।
रहस्यमेतत् ननुभक्ति वर्जिते
प्रकाशनीय न जनेपि कश्चित् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
त्रयोदशाक्षरी प्रभाव कथनं नाम
षडुत्तर शततमः पटलः

* * *

# श्री पराशर संहिता

## सप्तोत्तरशततमः पटलः

### -: एकादश प्रयोग कथनम् :-

श्री पराशरः :-

श्लो।। अन्यं विशेषं वक्ष्यामि - लोकाना मुपकारकम्
प्रयोगा स्संति बहवः - तत्तत्कार्यानुसारतः ।।
मनूनां कार्य मुद्दिश्य - मैत्रेय श्रृणु तत्त्वतः
ग्रथितं संपुटं ग्रस्तं - समस्तंच विदर्भितम् ।।
तथा चाक्रान्त माद्यंतं गर्भस्थ सर्वतोवृतम
तथा युक्ति विदर्भं च - विदर्भग्रथितं तथा ।।
इत्येकादशथा मन्त्राः - प्रयुक्ताः कार्य सिद्धिदाः
तत्प्रकारः प्रवक्ष्यामि - समाहित मनाश्रुणु ।।
साध्यनामाणं मन्त्राणि - क्रमादेवैवशो मुने
मणि प्रवालमालापि - जप्या संग्रहिता स्फुटम् ।।
वश्याकर्षण योगेषु - प्रयोग समुदाहृतः
ग्रथितो नाम सहसा - सिद्धिदः सर्वदेहिनां ।।
मन्त्रं पूर्वं समुच्चार्यं - सम्पूर्ण मनुलोमतः
साध्यानाम ततः सर्वं - पश्चान्मंत्र विलोमतः ।।
संपूर्णमुच्चरे द्वेष - प्रयोगः सपुटाभिदः
शान्तिपुष्टि क्रियास्वेव - त्रैलोक्यंश्यवकारकः ।।
जह्ययत्नेन मैत्रेय - साधके सिद्धि कांक्षिभिः
मन्त्रस्यार्थ समुच्चार्य साध्यानाम ततः परम् ।।
मन्त्रार्थ मुच्चरे त्पश्चा दाभिचारिक कर्मणि
ग्रस्तेनाम प्रयोगोऽयं - घोर शत्रु विनाशनम् ।।

साधकेन प्रयोक्तव्यो - मारणे ब्राह्मणं विना
साध्यानाम समुच्चार्य - सर्वं चाप्यासु संवदेत् ॥
समस्ताख्य प्रयोगेयं - शत्रोरुच्चाटने स्मृतः
मन्त्रार्ण द्वय मुच्चार्यं - साध्य नामाक्षरं ततः ॥
एकं पश्चान्मनोवर्ण - द्वयं एकाभिदाक्षरम्
पुनर्मंत्रार्णं युगलं - एकं नामाक्षर ततः ॥
एवं विदर्भितो नाम - प्रयोगो दण्ड नाशनः
विष संरक्षकश्चैव - साधकानां वरप्रदः ॥
साध्यानाम समुच्चार्य - मन्त्रपूर्णं मथोच्चरेत्
शेषंच साध्यनामार्थ - पश्चादुच्चारयेद्बुधः ॥
आक्रांत इत्ययं लोके - प्रयोग स्सर्वसिद्धिदं
वश्योच्चाटन संस्तम्भ - संविशेषे तु शस्यति ॥
साध्यानाम समुच्चार्य - मन्त्रपूर्ण मथोच्चरेत्
पुनश्च साध्यनामेति - सोयमाक्रांत नामकः ॥
प्रयोग सर्वलोकेषु - विद्वेषण कर स्मृतः
मनुमुच्चार्य सम्पूर्णं - द्विरावृत मनन्तरम् ॥
साध्यानाम पुनर्मंत्रं - द्विरावृत्त मुदीरयेत्
गभस्त इति विख्यातः - प्रयोगेयं मुनीश्वर !
वश्योच्चाटन विश्लेष - मारणादिषु सिद्धिदः
त्रिधा मन्त्रं वदेत्पूर्वं - तथा चान्ते त्रिधापुनः ॥
सकृत्साध्य भवेन्मध्ये - तं विद्यात्सर्वतोवृतं
सर्वोपसर्ग शमनः - सर्वमृत्यु निवारणः ॥
सर्व सौभाग्य जनकः - प्रयोगेयं महामुने
आद्यंतयोर्मनुं जप्त्वा - मध्ये तं साध्यनामतः ॥

एवं त्रिरावृत्ति योगा - ह्याम्नायुक्ति विदर्भितः
प्रयोग स्सर्वरोगघ्नो - भूत प्रेतादि नाशनः ॥
सर्वविद्याकर श्शीघ्रं - गोपनीयः प्रयत्नतः
साध्यनामार्णं मुच्चार्य - एकवारं मनुं जपेत् ॥
तत्परं साध्य नामार्णः - ततो मन्त्रं ततोक्षरम्
एवं नाम्नि समाप्ते तु - पूर्ण नाम समुच्चरेत् ॥
पुनर्मन्त्रं पुनर्नाम - सोऽयं मन्त्रं विदर्भितः
प्रयोग स्सर्व कार्येषु - सर्व मङ्गल दायकः ॥
गोपनीयः प्रयत्नेन - सिद्धिदः साधकोत्तमैः
मन्त्रप्रयोगा विज्ञेया - एकादश विधा मुने!
प्रयोगो ईदृशो यस्य - जपस्तस्य हितादृशः
जपस्य च दशांशेन - होमस्तर्पण मिष्यते ॥
एवं कृते मनुस्तस्य - सर्वसिद्धि प्रदायकः
प्रयोगं चापरं वक्ष्ये - गोप्यं लोकोपकारकम् ॥
पञ्चवारं जपेन्मन्त्रं - सकृत्साध्यं पठेत्पुमान्
मौनी जितेन्द्रियो विद्वान् - भक्त्या सर्वार्थ सिद्धये ॥
एवं जपेत योगीन्द्र - पञ्च साहस्र मात्रकः
दशांशं तर्पयेद्धीमान् - तद्दशांशं हुनेद्बलिः ॥
ब्राह्मणान्भोजयेत्पश्चात्प्रयोगोयं महत्तरः
सर्वापद्भ्यो विमुच्येत - सर्वकार्याणि साधयेत् ॥
प्रभु सन्मान माप्नोति - राजवश्य मनुत्तमम्
ज्वरापस्मार कुष्ठादि - वातरोग भयानि च ॥
नश्यन्त्येव न संदेहः - सत्यं सत्यं मुनीश्वर
सप्तमंत्रात्मका विद्या - या प्रोक्ता मुनिपुङ्गव ॥
तत्राद्यां द्वादशार्णाख्यां - जपेदुक्तं प्रयोगितः
शृङ्खलाबन्ध निर्मुक्तः - तस्य सन्ध्यो भविष्यति ॥

शत्रुसंहरणार्थाय - वानरस्य मनुं जपेत
उक्त मार्गेण सहसा - शत्रु स्तस्य विनश्यति ॥

भूतप्रेतादि नाशाय - नारसिंह मनुं जपेत्
अमुनैव प्रयोगेण - सत्यमुक्तं मयाद्विज ॥

विषनिर्हरणार्थाय - विद्यां गारुत्मतीं जपेत्
उक्त प्रयोग मार्गेण - विषं तस्य विनश्यति ॥

ऐश्वर्यार्थं जपेद्विद्वान् - श्री वराह प्रकाशिकां
अचिरादय माप्नोति - संपदश्शक्र दुर्लभाः

द्वात्रिंश दक्षरमयं - हयग्रीव प्रकाशकम्
वश्यमन्त्रं जपेद्वश्ये - राजवश्य मवाप्नुयात् ॥

उक्तेनैव प्रकारेण - सप्तमं यो मनुं जपेत्
सर्वाश्च सिद्धयस्तस्य - करामलक सन्निभः ॥

अनेनैव प्रकारेण - यं वा कं वा जपेन्मनुम्
सद्यस्सिद्धि मवाप्नोति - सत्यं सत्यं न संशयः ॥

अर्थवादा बहूत्सन्ती - सत्यं सत्यं मयोदितम्
संशयं मा कुरुष्वात्र - संशयात्मा विनश्यति
महत्तराख्य नामेयं - सर्वसिद्धि प्रदायकम् ॥

अति रहस्यमिदं कथितं मया
मतिमत स्तवमंत्र महोदधे
अनुचितं गुरुभक्ति विवर्जिते
प्रकटनं परमापद मिच्छति ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
एकादश प्रयोगकथनं नाम सप्तोत्तर शततमः पटलः

卐 卐 卐

# श्री पराशर संहिता

## अष्टोत्तरशततमः पटलः

### -: प्रेतासन हनुमत्प्रभाव कथनम् :-

श्री पराशरः :-

श्लो॥ अन्यद्रहस्यं वक्ष्यामि - श्रुणुष्व मुनिपुङ्गव
पुरा रावण पुत्रो भूत् - महाबल पराक्रमः ॥
समस्त देवता द्रोही - नाना क्षुद्र विविस्मृतः
तं हत्वा देव कार्यार्थी - हनुमान्मारुतात्मजः ॥
योगास नोपविष्टो भूत् - भीमे तस्य कलेबरे
मृतो भूतगणै र्भीमैः - रुद्रोभूतपति र्यथा ॥
तथा प्रभृति योगींद्रः - त्रिषु लोकेषु विश्रुतः
प्रेतासनि इति श्रीमान् - हनुमान् केसरी सुतः ॥
तस्य ध्यानेन सहसा - भूतप्रेतादिजं भयम्
विनश्यति क्षणादेव - नात्र कार्या विचारणा ॥
तत्तेध्यानं प्रवक्ष्यामि - मन्त्रं च मुनिपुङ्गव
दशयोजन विस्तीर्णे - पञ्चाशद्योजनोन्नते ॥
अतिघोर महादंष्ट्र - कराल नयनोज्वले
स्तब्धरोम द्रुमाकीर्णे - सिद्धा द्विपयिवा सरे ॥
अक्षासुर शरीरेस्मिन् - गत जीवे भयंकरे
योगासन समासीनं - भूतप्रेत गणा वृतम् ॥
त्रिशूल घण्टा डमरु - कपालासिगदा द्रुमान्
पर्वतं चाष्टभिर्हस्तै - र्दधानं त्रिलोचनम् ॥
नीलग्रीवं महाभीमं - नागयज्ञोपवीतिनम्
व्याघ्रचर्म परीधानं - गजचर्मोत्तरीयकम् ॥

शुद्धस्फटिक सङ्काशं - चन्द्ररेखावतंसकम्
तरुणार्क प्रतीकाशं - जटामण्डल मंडितम् ।।
नवभस्मानुलिप्ताङ्ग - दण्डमाल्या विराजितम्
नानामाणिक्य खचितं - स्वर्णकुण्डल धारिणम् ।।
उलूखं मुखरं सम्यक् - दीर्घवालेन शोभितम्
योगपरं कृतानन्तं - अनन्ताद्भुत विक्रमम् ।।
चिन्तये द्वायुतनयं - रुद्रपिंड महौजसम्
गौरीगर्भ सम्भूतं - गजानन सहोदरम् ।।
प्रेतासन हनूमन्तं - एवं ध्यात्वा जपेन्मनुम्
तन्मंत्रं च प्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गव ।।
एकाक्षरं महद्गुह्य - पञ्चवक्त्रं हनूमतः
पञ्चाक्षर सपिंडाख्यं - पञ्चपातक नाशनम् ।।
मन्त्रोद्धारं प्रवक्ष्यामि - सर्वलोकोपकारकम्
आदौ वानर बीजं च नारसिंहं च गारुडम् ।।
लक्ष्मी वराह संज्ञं च - हयग्रीव मतः परम्
एतानि पञ्चबीजानि - समीड्यैक मनुर्भवेत् ।।
एषएव महामन्त्रो - भूत प्रेत निवारण:
सर्वपाप हरस्तद्वत् - सर्वोपद्रव नाशनः ।।
सदाशिव ऋषिः साक्षात् - बृहती छन्द उच्यते
आपन्निवारण स्साक्षात् - हनुमान्देवता स्मृतः ।।
ह्रां ह्रीं ह्रू मिति चत्रीणि - बीजं शक्तिश्च कीलकम्
षड्दीर्घ मायया सम्यक् - षडङ्गानि च निन्यसेत् ।।
ध्यानमुक्ताविधं कृत्वा - जपेन्मन्त्र समाहितः
लक्षमेकं पुरश्चर्या - ततः सिध्यन्त्य संशयः
दशांश विधिना तत्र - होमं ब्राह्मण भोजनम् ।।

ध्यानम् :-

बूबूकार विमन्त्रकिल्कि पुरवै नृत्यं च गायस्तथा
भ्रू विक्षेप विचित्र नेत्र कुहर प्रोन्मीलना मीलनै।।
भूतप्रेत पिशाच राक्षस गणान् संतर्पयन्नद्रिवत्
सोयं श्री हनुमत्प्रभुर्विजयते ब्रह्माण्ड मालोकयन् ।।
भस्माङ्गरागांचितरुण्डमालिनं
श्मशानभूमि भवनं दिगम्बरम्
प्रेतासनं नागविभूषिताङ्गं
भूताधिनाथं हनुमन्त मीळे ।।
मदनाग मारिणं - प्रेतभस्मधारिणं
भूतसङ्घ वेष्टितं - प्रेतभूमि निष्ठितम् ।।
भीषण त्रिलोचनं - भीति दुःख मोचनं
व्याघ्रचर्म वासिनं - वायुसून माश्रये ।।
अनेन मन्त्र राजेन - सम्मन्त्र्य मुनिपुङ्गव
अष्टोत्तर शतावृत्यै - भस्मादायाग्निहोत्रजम् ।।
ग्रह ग्रस्तेक्षिपेत्सद्यः - ग्रहमुक्ति र्भविष्यति
अष्टोत्तर शतं जप्त्वा - तज्जलं पाययेत् पुमान् ।।
क्षयापस्मार कुष्ठादि - रोगान्नश्यन्ति तक्षणात्
नाभिदघ्ने जलेस्थित्वा - जपेदष्टोत्तरं शतम् ।।
महाभूताः पलायन्ते - तस्यदर्शन मात्रतः
किमत्र बहुनोक्तेन - यंयं कामयते हृदि ।।
तंतं काममवाप्नोति - जपादस्य न संशयः
अथ यंत्रं प्रवक्ष्यामि - एकाक्षर हनूमतः ।।
पञ्चकोण लिखेत्पूर्वं - वर्तुलं विलिखेत्ततः
चतुर्द्वार समायुक्तं - भूपुर परिकल्पयेत् ।।

विलिखेत्पञ्च कोणेषु - पञ्चबीजान्यनुक्रमात्
प्राणप्रतिष्ठां कुर्वीत - प्रत्यहं पूजयेद्यतः ।।
चक्रं धारयते विद्वान् - सर्वपीडा निवारणम्
सौवर्णे रजिते ताम्रे - ताम्र वर्णेपि वा मुने ।।
चक्रं कुर्वीत मतिमान् - लेखयेच्च प्रयत्नतः
गुरुं संपूज्य यत्नेन - गृह्णीयाच्चक्र मुत्तमम् ।।

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
प्रेतासन हनुमत्प्रभाव कथन नाम
अष्टोत्तरशततमः पटलः

* * *

# श्री पराशर संहिता

## नवोत्तरशततमः पटलः

-: सपिंड्यैकाक्षर विद्यावान् चरित्र कथनम् :-

श्री पराशरः :

श्लो।। अत्रैवोदाहरिष्येहं - कथां पाप प्रणाशिनी
सपिंड्यैकाक्षर मनोः - माहात्म्यं प्रतिपादिकां
पुरा केरल देशेषु - कान्तिन्यै नगरोत्तमे
ब्राह्मणो वेद शास्त्रज्ञः - विद्यावानिति विश्रुतः ।।
हनूमद्भक्ति निरतः - निर्ममो निरहंकृतिः
एकाक्षर मयीं विद्यो - जपन्नेष हनूमतः ।।
निनाय बहुकालंतु - हनूमध्यान निष्ठितः
स एकदाति निर्विण्णः - संसारे दोष दर्शनात् ।।

हनूमद्दर्शनाकांक्षी - प्रिययौगन्धमादनं
गच्छन्पथिमुनिश्रेष्ठः - भगवत्यं जनासुते ।।
भक्त्याका पवंशो भूत्वा - चिन्ता मे वञ्चकारसः
अहोमूर्खस्स मे बुद्धिः - अमर्यादात्प्रवर्तते ।।

आगम्यमति योगीन्द्रः - हनुमंत द्विदक्ष्यसि
यं चा मनंति वेदांताः - षड्भिः तात्पर्य लिङ्गकैः
ब्रह्मादय स्सुरास्सर्वेऽपि - विचिन्त्य विलोकितुं
योगिनोऽयं प्रपस्यन्ति - वैराग्य विमलाशयाः ।।

यं दिदृक्ष्यन्ति विद्वानो - यज्ञदानादि कर्मभिः
तमहं श्री हनूमंतं - अत्यन्त सुकृतं कथम् ।।
द्रक्ष्याप्यमित दौर्भाग्यः - सम्पूर्णं मिव शेवधिः
तथापि श्री हनुमति - भक्ति लेशोऽस्ति मे यतः ।।

भविष्यति ततः प्रीतः - भक्तिवान्भक्ति भावनः
शकुनानि बहून्यद्य - दृश्यन्ते सुदृढानि वा ।।
दक्षिणं स्पन्दते मेऽक्षि - विहगाः सम्यगामिनः
कल्याणोचित गाधेयं - लोकेषु परिदृश्यते ।।

येति जीवंति मानन्दो - नवं वर्ष शतादपि
सन्तो जीवन मिच्छन्ति - जीवन्भद्राणि पश्यति ।।
निवारयंति बहुथा - पण्डितास्तु सदैवमाम्
कथ द्रक्ष्यति दुर्बुद्धे! जगदीशं भवानिति

तथापि हनुमल्लग्न - मद्बुद्धिर्न निवर्तते
यथा पतिव्रता लोके - युवानं सुन्दरं प्रियम् ।।
तस्माद्द्रास्यतिये देवः - सक्षात्कारं हरीश्वरः
सत्यमेव न सन्देहो - दक्षिणा स्पन्दते भुजः ।।

द्रक्ष्येकदाहं तरुणार्क सन्निभं दयामृतार्द्रारुण पङ्कजेक्षणं
मुखकपीन्द्रस्य मृदुस्मितांचितं चिरत्नरत्नांचित कुण्डलोज्
कथाहमारादुपयां तमद्भुतं प्रभावमीशं जगताकपिप्रभं
समीक्ष्यवेगादभिगम्य संस्तुवन् जगामहर्षाप्रपतन्पदाब्जयो
कदाञ्जनासूनु पदाम्बुजद्वयं कठोरसंसारभयप्रकामकं
करद्वयेन प्रतिगृह्य सादरो मदीयमूर्धानमलं करोम्यहम् ।

कथं लुठं तं स्वपदाब्जयो मुदा
हठात्समुत्थाप्य हरीन्द्र नायकः
मदीय मूर्ध्नि स्वकराम्बुजं शुभं
निधाय मार्भैरिति वक्ष्यते विभुः ॥ ः

प्रदीप्त कार्तस्वर शैलभास्वरं
प्रभूतरक्षोगण दर्प शिक्षकं
सुवर्चलेशस्य सुखी भवाम्यहम् ॥ ः

इति चिन्तयामनस्य - केदारमगमन्मुनिः
तत्र स्नात्वा महादेवं - केदारमहिषाकृतिम् ॥ २

पूजयामास बहुधा - देवं त्रिपुर घातिनं
ततो जगाम शैलेन्द्रं - सहमानो हिमव्यथाम् ॥ २

अति घोर मृगाकीर्णं - सिंहव्याघ्र दुरासदम्
एतस्मिन्नन्तरे श्रीमान् - हनुमान्भक्त वत्सलः ॥ २

भक्तदुःखा सहिष्णुत्वात् - प्रादुरासीद्द्विजन्मनः
वृद्धब्राह्मण वेषेण - विद्यावन्तं तमब्रवीत् २

भो भो ब्राह्मण दुर्बुद्धे - सिंह व्याघ्र समाकुले
प्रयास्यसेनु घोरेऽस्मिन् - वने वनचरो यथा ॥ २

ग्राबानुवाच :

भो भो स्वामिन् अहं यास्ये - वायुसूनो दिदृक्षया
गन्धमादन शैलेन्द्र - सदा हनुमदाश्रयं ॥ २

वृद्धब्राह्मण उवाच :

श्लो।। अहो ब्राह्मण दुर्बुद्धे! - हनुमद्दर्शनं वृथा
किं दास्यति सते विद्वान् - सोऽपि कश्चन मर्कटः ।।
सुग्रीव सचिवो नित्यं - पराधीनो निकेतनः
तिर्यग्जन्तु रथाप्येनं - द्रष्टु मिच्छसि हे द्विज!
वानरं कच्चिदेवान्य - दृष्ट्वा व्रजतु मन्दिरं
इति श्रुत्वा वचस्तस्य - तिरस्कारं हनूमतः ।।
द्विजो जज्वाल कोपेन - शुष्केन्धन इवाग्निना
पुनर्विषण्ण हृदयो - वाक्यं चैव मुवाचह ।।

विद्यावानुवाच :

श्लो।। आकारितः केन भवान् द्विजबन्धो दुरात्मक
का गतिं प्राप्स्यसे देवं - दूषयित्वा कपीश्वरम् ।।
भवादृशाः संतिलोके - निर्भाग्या स्तत्र तत्रहि
न चेत्कथ मनध्यास्यु - र्धनावृष्ट्यादयो भुवि ।।
अत्यन्त जठराकार - तव संहरता मृतिः
किं भोक्ष्यसे हनूमन्तं - दूषयित्वा परात्परम् ।।
यतः पश्यति विद्वांसः - योगिनोगत कल्मषाः
तस्यत्वद्दूषणादेव - काहानिः करुणा निधेः ।।
यथेष्टं दूषयत्वंतु - सृष्टि स्थिति परात्परं
वेद वेदाङ्ग तत्वज्ञाः - तामतं विदुर्निवुंधाः ।।
त्वंतु मूर्खो दुराचारः - कथं वेत्थि जगत्पतिं
शाठ्यस्य तवदोषोयं - नतु दोष स्तवद्विजः ।।
ममाग्रतो नतिष्ठाशु - गच्छ गच्छ यथा सुखं
हनूमद्दर्शनं परं - तं संद्रक्ष्यामि चक्षुषा ।।

इत्युक्त्वा विररामाद्यो - विद्यावान् मितितेक्षण:
कर्णौ पिधाय हस्ताभ्यां - जगाम हनूमतः ॥
हेमरम्भावने रम्ये - हेमवल्लरि संयुतं
सुवर्चलास्यं पश्यंतं - ध्यायेहं वायुनन्दनम् ॥
एतस्मिन्नन्तरे देवः - प्रादुरासीत् शुभाकृतिः
द्विजरूपं परित्यज्य - निज रूपेण मारुतिः ॥
सोऽपश्यदद्भुताकारं - विद्यावान्मारुतात्मजं
तप्तस्वर्ण गिरिप्रख्यं - पिङ्गाक्षं रत्नकुण्डलम् ॥
दीर्घवालं वृषस्कन्धं - कपिभिः परिवेष्टितं
त्रयस्त्रिंशत्कोटि संख्याजंन रुद्र गणावृतम् ॥
हनूमन्तं महात्मान् - ददर्श द्विजपुङ्गवः
विलोक्य सहसाभू - मावपतत्पादयो द्विजः ॥
हर्षादुत्फुल्ल नयनः - स्तोत्रैस्तुत्वा जगद्गुरुं
देवदेवजगन्नाथ - पुराण पुरुषोत्तम ॥
तव संदर्शनान्नून - मद्भाग्यं केन वर्ण्यते।
त्वामामनन्ति श्रुतयो - जगतामादिकारणम् ॥
त्वमेव श्रेष्ठ कर्ता च - त्वमेव जगतां पतिः
अपराध सहस्राणि - क्षम्यतामिति चाब्रवीत् ॥
इत्येवं वादिनं भक्तं - समुदाप्य कपीश्वरः
समालिंग्यातिहर्षेण - प्रददौ मुद्रिकोत्तमम् ॥
रामरूपांक मेकत्रं - निजरूपांक मन्यतः
शुद्धस्वर्ण मयं दिव्यं - सर्वसम्पत्प्रदायकः ॥
एतत्पूजनसद्बुद्ध्या - त्वद्गृहे निवसाम्यहं
त्वमेवाहं कस्सन्देहः - चिन्तामनसि माकृथाः ॥

इत्युक्त्वा तं निजगृहं प्रापयामास च क्षणात्
अन्तर्दधौ च हनुमान् - उष्ट्र मारुह्यवेगतः ॥
परिवारयुतो देवः - द्विजोप्यानेत्सु विस्मितः
तदा प्रभृति बिप्रेन्द्रः ततो पि वृढ भक्तिमान् ॥
सर्वं हनुमदाकारं - ध्यायन्ब्रह्माण्ड मण्डलं
पुत्र पौत्र परिवृतो - भुक्त्वा भोगान् यथेप्सितान् ।
अन्ते हनुमत्साक्ष्यं - सायुज्यं समवाप्तवान्
इति तव कथित भो - श्रीमदेकार्णविद्या ॥
विभव धनरहस्यं - गोपनीयं प्रयत्नतः
अपर मपिच किंते - वेदनीयम् हनूम
त्प्रभु चरितमतस्त द्ब्रूहि वक्ष्यामि सर्वं ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
सपिड्यैकाक्षर विद्यावान् चरित्रकथन नाम
नवोत्तरशततमः पटलः

* * *

# श्री पराशर संहिता

## दशोत्तरशततमः पटलः

—ः नीलाद्रि प्रभाव कथनम् ः—

श्री मैत्रेयः :-

श्लो॥ पराशर महाप्राज्ञ - सर्वमन्त्र प्रवर्तक
संशयोऽस्ति वचिद्ब्रह्मन् - पञ्चमे पटले पुरा ॥
आज्ञापितं त्वया सर्वं - लोकरक्षण कांक्षया
तदिदानीं ममाचक्ष्व - सर्व लोकोपकारकम् ॥

नीलनाम्ना कथं ख्याति - पुरुषोत्तम मुपेष्यति
कथय ज्ञापितं तेन - हनूमत्प्रभुना मुने ॥

**श्री पराशरः :**

श्लो॥ अस्ति ब्रह्माण्ड मध्यस्थं - क्षेत्रं तु पुरुषोत्तमं
तन्नायको जगन्नाथः - सर्वपाप प्रणाशनः ॥
सर्वधा रमते लक्ष्म्या - यथा वैकुण्ठपट्टणे
तथा सुभद्रयास्माकं - मोदते पुरुषोत्तमे ॥
अथांतरे महाप्राज्ञः - नीलोनाम महातपाः
विभीषण सुतश्श्रीमान्हनूमान्भक्त शेखरः ॥
दुश्चरंत तपस्तप्तं - पुरुषोत्तम मंदिरे
स्नात्वातु रोहिणीकुण्डे - प्रभाते प्रत्यहं पुनः ॥
मार्कण्डेय स रसना च - महोदधि जपे तथा
नित्यं त्रिषवहिं स्नात्वा - तपस्तेते सुरोत्तमः ॥
प्रत्यहं वटमूलेतु - हनूमध्यान तत्परः ॥

ध्यानम् :-

व॥ गन्धमादन शैलाग्र कनक कदलीवनमध्ये रत्नसिंहासनासी कोणस्थितं, हिरण्यवर्णः पीताम्बरधरं, पीतगन्धं, सकलाभर कदलीफलहस्तं, उष्ट्रवाहनं कौण्डिन्यस गोत्रोद्भवं, सुवर्चः एवं ध्यात्वा हनूमन्त मावाहयामि ॥

श्लो॥ स्मारं स्मारमते यन्त्र - मुपदिष्टं हनूमतः
निश्चलांतर्मती भूत्वा - बहिरावृत्त मानसः ॥
विभीषण सुतोनीलः - चचार परमं तपः
अथान्तरे महासत्वो - ह्यग्निजिह्व इति श्रुतः ॥

अन्योविकृत पादश्च - नाम्ना लोकेषु विश्रुतः
तावुभौ दुष्टकर्माणौ - राक्षसौ भीम विक्रमौ ॥
तस्यतांतु तपस्तत्र - पुण्यक्षेत्रे महात्मनां
देवानां दानवानां च - मनुजानां तु विशेषतः ॥
करिष्यावहः तपो विघ्नं - स्वस्वशक्त्यनुसारतः
इति तौ राक्षसौ दृष्टा - पाप निश्चय निश्चितौ ॥
नीलस्य तपसा विघ्नं - कर्तु मुद्युक्त राक्षसौ
महापर्वत संकाशौ - विकृतांग्न्यग्नि जिह्वकौ ॥
नीलस्य पुरतः स्थित्वा - चक्रतुः तद्विभीषिकां
न चचाल तथाप्येषः - धीरोदात्त मनोमनात् ॥
तौ भूयोऽपि महानिद्यौ - व्याघ्ररूपधरावुभौ
तीक्ष्ण दंष्ट्र महाघोर - मग्नि ज्वालाग्र जिह्वकौ ॥
व्यालायवदनं भीमं - उभयपार्श्वौ समाहितौ
तौ दृष्ट्वा विकृताकारौ - नीलो व्याकुल मानसः ॥
प्रणितव्वो महात्मानं - हनूमन्तं स्वचेतसः
तुष्टाव परम स्तोत्रैः - ऋग्यजुस्साम गोचरैः ॥
हनुमान् किन्नु मे चित्रं - तपः प्रत्यूह चेष्टितं
मद्भाग्यहानिरेवैषा - त्वत्कृपाया विपर्ययः ॥
साधु द्वेषण चित्तानां - स्वभावो रक्षसां यदि
अथवा तव मायैषा - निश्चितुं नैव शक्यते ॥
अज्ञान सागरे मग्नं - पापौ श्री हनुमत्प्रभो
त्वमेव जगतां नाथ - संसारार्णव तारक!
सदा विघ्नहर प्राज्ञ - पाहिमां भक्तवत्सल ॥
चण्डभानु समप्रख्य - खडिता सुरमंडल
शुण्डक्रिया गान लोल - प्रचण्ड हनुमत्तमः ॥

* * *

कालमृत्यु नाशनं - काञ्चनाद्रि सन्निभ
रागद्वेष वर्जितं - रोगनाशकारणम् ॥ २३

भीमसेन वालरोम - लिङ्गनाश कल्पकं
आदि मध्य वर्जितं - स्वाञ्जनेय माश्रये ॥ २४

जम्बुमालि मर्दनं - कालनेमि संहरं
नीलमेघ राज्यदं - मत्स्यवल्लभात्मजम् ॥ २५

शतमुख हरणं - सुरपति विनुतं
इष्टवस्तु दायकं - श्वाञ्जनेय माश्रये ॥ २६

* * *

ब्रह्म ब्रह्म पुरातनं विधि विधि - नाद स्वरूपं परं
ह्यु त्पत्ति स्थितिनाशनादि रहितं - कालस्य कालात्मकम्।
तत्तत्काल यथोचितोग्रवपुषं - तेजोमयं शाश्वतं
सत्यानन्द चिदात्मकं तु हनुमान् - स्वामन्तरंगे भजे ॥ २८

कपीश्वरो रक्षति देहबन्धात् न देहि बन्धाश्रित जीवलोकः
वृक्षान् समारक्षति वृक्षवापि न तत्फलाधोवति वृक्षवाटिः ॥

गुरूयोप्यहनुम ग्राह्यो - हनुमान्मायतो सृजः
स्वय मारोपितच्छेत्तुं - विषवृक्षोपि नोचितः ॥ ३०

पाताल लङ्का गमनोत्सुकाय - मैरावणोद्योग विनाशकाय
दुर्दण्ड कारागृह मोक्षकाय - नमोस्तु ते वानरनायकाय ॥ ३१

कैलासशैलाग्र निवास भूतं - भेताल दैत्यामर सेविताङ्घ्रिः
नन्दीश भृङ्गीश पुरोनटंतं रुद्रावतारं हनुमन्त मीडे ॥ ३२

जटाधरं चन्द्रकलावतंसं त्रिशूलपाणिं गजचर्मचेलं
विभूति रुद्राक्ष विचित्रितांगं ध्यायमि सर्वेश्वरमाञ्जनेयम् ॥

इतिस्तुत्वा महात्मानं - प्रणतो दण्डवद्भुवि
अथांतरे दयाशीलो - हनुमान्पूत भावनः ॥ ३४

स्वभक्तस्य च नीलस्य - तपोविघ्नं ससोढवान् ॥

श्री हनुमानुवाच :

श्लो॥ स वा ह्यो सर्व दुःखानि - सवास्येपरमाननाः
न सहे भक्त दुःखानि - सत्यं धर्मेण मे शपे ॥
तावुभौ क्रूर कर्माणौ - तपसो विघ्न कारिणौ
क्षणे निवारयामास - मशकाविव मारुतिः ॥

ब्रह्माण्ड व्याप्तदेहं दशमुख हरणं मेरुशैलाग्रवासं
गायन्तं राममन्त्रं तृण मिव जगति भावयंतं महांतम् ॥
भक्तौघ त्राणहेतोर्मनसि च सततं चिन्तयन्तं कथं चि
त्तं देवं दिक्षु दैत्योझडिति विदलित क्रूरदेहानुबन्धौ॥
ततः प्राह हनुमंतं - विभीषण सुतो वचः
कृतार्थोऽस्मि कपिश्रेष्ठ! - त्वत्प्रसादा दहं परम् ॥

किंतु देव प्रतिज्ञातं - त्वयाकेनैक हेतुना
नीलंनाम प्रसिद्धं तु क्षेत्रं श्रीपुरुषोत्तमम् ॥
ख्यातिं गमिष्यति श्रेष्ठं - श्रेष्ठ! त्रैलोक्य व्यापिनं
एतच्छ्रेयः कथं लभ्यं - पूर्वपुण्य वशानुगम् ॥

अथवा त्वत्प्रसादेन - लभ्यते नात्र संशयः
तदुपायं वद श्रीमन् - त्वदेक शरणस्य मे ॥
महान्तो भक्त संरक्ष - प्रतिज्ञातार्थ पालकाः
इति तद्वचनं श्रुत्वा - हनुमान्भक्त वत्सलः ॥

भक्ताभीष्ट प्रदानाय - निश्चितात्म मतिः कपिः
प्रणिदध्यौ जगन्नाथं - पुरुषोत्तम नायकम् ॥
ततः प्रसन्नवदनः - जगन्नाथस्तमब्रवीत्
विभीषण सुतो नीलः - तव भक्तोमहासुरः ॥

किमुद्दिश्य फलं ब्रह्मन् - तपश्चरति दुश्चरम्
अजानन्निव धर्मात्मा - तत्पृष्टवा जगतांपतिः ॥
तूष्णीं बभूव मैत्रेय - प्रहसन्मुख पङ्कजः
ततः प्रोवाच हनुमान् - पुरुषोत्तमनायकम् ॥
एतस्यक्षेत्र वर्यस्य - नीलनाम्ना त्रिलोक गं
प्रसिद्धि याचते नूनं - एषनीलो महातनुम् ॥
अब्रवीच्चजगन्नाथो - वचनं कपिनायक
सफलोस्तु कपिश्रेष्ठ! - तव भक्त मनोरथः ॥
अद्य प्रभृति लोकेषु - भूयाच्छ्रीपुरुषोत्तमम्
नीलाद्रिनामकं भूया - न्महानीलाद्रि नामकम् ॥
नीलमाधव इत्याद्या - नीलसुन्दर इत्यपि
त्वद्भक्त सेव्यनामाहं - लोकेख्याति मवाप्नुयात् ॥
इति तद्वचनं श्रुत्वा - हनुमान्मारुतात्मजः
भक्ताभीष्टस्य लाभेन - सन्तुष्ट हृदयो भवत् ॥

श्री पराशरः :

श्लो॥ एतस्ते कथितं ब्रह्मन् - नीलाद्रि ख्याति वैभवं
तृणत्वां जपतां चेदं - महच्छ्रेयो भविष्यति ॥
अन्यद्रहस्यं वक्ष्यामि - लोकानामुपकारकं
मन्त्र विद्यासु विषये - श्रृणुष्व मुनिपुङ्गव!
क्षेत्रयोनिः सदाबीजं - कीलकं कवचं ततः
शक्ति रत्नं च जीवश्च - ऋषि छन्द इति द्विजा ॥
समस्त मन्त्रजालानां - दशाङ्गानीति मान्त्रिकाः
बीजस्य सम्यग्विज्ञाना - द्योनिरित्यभिधीयते ॥
योनेस्संधारणात्सम्यक् - क्षेत्रं तु परिकीर्तितं
उत्पत्तिस्थान माख्यातं - योनिर्मंत्रस्य मांत्रिकैः ॥

बीजस्थान तथा सम्य - ग्योनिस्तु परिकीर्तितः
तत्र स्योत्पादनादूर्ध्वं - मंकुरोत्पादना दिव ॥
बीजमित्युच्यते प्राज्ञैः - मन्त्रार्थस्य प्रकाशनम्
मंत्रास्स्वर पदानां च - मंत्रै स्संयोजनं मिथः ॥
कीलकं तु तवाख्यातं - गुह्याद्गुह्यतमं महत्
कवचं सर्वतोरक्ष - विधाना कवचात्मकम् ॥
मनुत्राण विधानाद्वा - सर्वापद्भ्यो निवारणात्
भूतप्रेत पिशाचादि - निवारण विधौ तथा ॥
सर्वाभीष्ट प्रदानेन - सामर्थ्यं शक्तिरुच्यते
जप्तस्य मन्त्र राजस्य - प्रयोगः कर्मणि क्वचित् ॥
अस्त्र मित्युच्यते तत्र - षडङ्ग न्यास वेदिभिः
जीवनाद्यास्तु संस्कारा - मंत्राणां दशधास्मृताः ॥
तत्र जीवन संस्कारा - ते मंत्राणां या स जीवति
स जीव इति विज्ञेयो - मन्त्र तत्त्वार्थ वेदिभिः ॥
ऋषिर्मन्त्रस्य योद्रष्टा - सम्प्रदाय प्रवर्तकः
दश पञ्चादि संज्ञायाः - मन्त्राणां वर्णगा मुने ॥
तं बन्ध मिति विज्ञेयं - छन्दस्यात्र विनिश्चितं
चतुर्विंशति छन्दांसि - मन्त्राणां मुनिपुङ्गव ॥
तत्रोत्तम मिति प्रोक्तं - छन्दसां वा चतुष्टयं
गायत्री बृहती चैव - तदामृत विराडपि ॥
अनुष्टुबिति सर्वेषां - शीघ्रसिद्धि प्रदायकः
एतच्छन्दोयुता मन्त्राः - शीघ्रसिद्धि तु सुव्रत ॥
तथैव बहुधा मन्त्राः - ऋषिभिर्बहुभिर्युताः
तत्रेश्वर ऋषिर्येषां - येषां ब्रह्म ऋषि स्मृतः ॥

रामचन्द्र ऋषिर्येषां - ते मन्त्राः शीघ्रसिद्धिदाः
आद्यो मर्कट नामासौ - द्वितीयं स्स्याद्वनेचरः ॥
तृतीयो हनुमान् ज्ञेयः - चतुर्थो वायुनन्दनः
बलाबली पञ्च मोच - षष्टिर्भूत हितानन: ॥
सप्तमोहि विशेषेण - परनारी सहोदरः
अष्टमो रामचन्द्रस्य - ततो मोहर पायिको ॥
नवमो विष्णुमूर्ति श्च - दशमो रावणांतकः
एकादशे रुद्र नाम - द्वादशे त्वंजना सुतः ॥
एतानि द्वादश रूपाणि - संस्मरेत् प्रयतो नरः
भक्त्या नियति माप्नोति - हनुमत्पद मुत्तमम् ॥
इति मुनिवर्यं सम्यगानु पूर्वात्
तव कथितोद्भुत लीलगः प्रभावः ।
सकल जनघनाघ फलापहारी
प्रति दिन माशु विधीयतां मनोज्ञये ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
नीलाद्रि प्रभाव कथन नाम
दशोत्तरशततमः पटलः

❀ * ❀

## श्री पराशर संहिता

### *एकादशोत्तरशततमः पटलः*

—: रामदासत्व प्रकार कथनम् :—

श्री मैत्रेयः :-

श्लो।। भगवन् सर्वतत्त्वज्ञ - पराशर जगद्गुरो!
लोकत्रये विनाज्ञातं - तवास्ति मुनि पुङ्गव ॥

अतस्त्वां संशयं किंचित् - प्रष्टु मिच्छामि तत्वतः
हनुमान्सर्व लोकेश - जीवो भगवति धृवम् ॥
किं त्वीश्वरो महादेवः - सक्षात्संसार मोचकः
अनादि निधनोऽनंतः - विधाता जगतः पतिः ॥
आनन्द मक्षरं ब्रह्म - पूर्णः परमपूरुषः
मया सम्बन्ध रहितो - निष्कलः परमेश्वरः ॥
नादबिंदु कलातीतो - हंस इत्युच्यते बुधैः
स पिंडचैकाक्षरादौ च - मन्त्रे ध्यान मुदीरितः ॥
भवतो शाम्भवै श्चिह्नैः - रंजितं श्रीहनूमतः
बहुरूपो महामायः - महाबल पराक्रमः ॥
ध्याया ब्रह्मेन्द्र विष्ण्वाद्यैः तत्तदिष्टार्थ सिद्धये
इत्युक्त भवतः श्रुत्वा - संशयो मे महामुने ॥
कथमेवं विधौ स्वामिन् - शिवः परमकारणं
आग्रमद्राम दासत्वं - तदाज्ञा किं करोम्वहम्
एतन्मे संशयो विद्वन् - छिंदि ज्ञानाशना मुने ॥

श्री पराशरः :-

श्लो॥ साधु साधु महाप्राज्ञ! मैत्रेय मुनिपुङ्गव
एतल्लोकोपकाराय - पृष्टं नाज्ञानत स्त्वया ॥
पुरा त्रिशूल रोमाख्यः - कश्चिद्राक्षस पुङ्गवः
योसौ विनिहितो वायु - सूनुना ते मयोदितः ॥
तस्यापि मातुलः कश्चित् - नाम्नागार्दभनिस्वनः
महाभयो महाकायो - महाबल पराक्रमः ॥
यस्मिन्मुच्यति निह्लदं - ब्रह्माण्डाभेद शंकया
ब्रह्मादयः सुरास्सर्वे - त्रासन्तो च दिवानिशम् ॥

देवदानव यक्षाद्यै - रजेयो लोककण्टकः
देव ब्राह्मण संहर्ता - यज्ञविच्छेद कारकः ।।

इन्द्रादयो लोकपालाः - खिद्यन्ति च मुहुर्मुहुः
ब्रह्मणो विष्णु नासार्थं - ययुः कैलास मन्दिरम् ।।

यत्र साक्षान्महादेवः - पिनाकी वृषभध्वजः
उमया रमते नित्यं - स्वात्मानं च परायणः ।।

प्रीतं स्तुत्वा महात्मानं - प्रणिपात पुरस्सरं
तेनाभिनन्दिता स्तद्व - त्कृतासन परिग्रहः ।।

अन्योन्यं कथयामास - कथाश्चित्रा सरेश्वरः
अथस्वार्था सनाशीनं - विलोक्य मधुसूदनम् ।।

शङ्करः प्रहसन्प्राह - किं त्वया ह्यागतं हरे!
इति श्रुत्वा वचस्तस्य - भगवान्पार्वती पतेः ।।

प्राह गम्भीरया वाचा - शङ्करं लोकशङ्करं
किं नवेत्सि महादेव! दैत्यं गार्दभनिस्वनम् ।।

देवदानव दुर्धर्षं - लोक संक्षय कारणं
विनश्येत्स यथा दैत्यः - तमुपायं वदस्वनः ।।

इति तस्य वच श्श्रुत्वा - शम्भुराह दयानिधिः
दैत्योमद्भक्ति संपन्नः - कथं वध्येऽह मच्युत ।।

न हानि कर्तुं मुद्युक्तो - दयापर वशो स्म्यहं
किमुतातिप्रियंभक्तं - मत्पूजैक परायणम् ।।

भवादृशानां का शक्तः - तस्य दैत्यस्य नाशने
परिहास वचश्शम्भो - रिति श्रुत्वा रमापतिः ।।

जग्राह रोषताम्राक्षः - तस्यते शिवभाषितं
नाहं भक्त स्तव शिव - सदात्वत्पूजनेरतः ।।

दृढ भक्तं परित्यज्य - मांदैत्यं बहु मन्यसे
कदाचित्तमसा विष्णो - दैतेयान् बहुमन्यसे ॥

कदाचिद्रजसा विष्णो - गौर्या विहरसे मुदा
कदा चित्सत्व सम्पन्नः - तारय स्यखिलान्मुनीन् ॥

विचित्रं चरितं शम्भो - तवबालीशवद्ध्रुवं
लोकक्षतिं न जानासि - साधुरक्षां नमन्यसे ॥

लोकानां मोहनार्थाय - किमेतच्चरितं तव
किमत्र बहु नोक्तेन विहरात्र नहि बया ॥

अहमेव वदिष्यामि - तमेवं दैव सङ्कटं
पश्य मे पौरुषं देव - सत्यं त्वच्चरणे छ्वपि ॥

इति तस्य वच श्श्रुत्वा - प्राह शम्भु स्वयं पुनः
त्वादृशाः श्रुणु तिष्ठंति - मद्भक्तस्यपुरोहरे ॥

मद्भक्ति वर्मणाच्छन्नं - हंतु कः प्रभवे द्भुवि
तदलमो हरे व्यर्थः - प्रतिज्ञाभिस्त्वाधुना ॥

मिथ्यावादि सदैवत्वं - मयाविचरितद्धनुः
इति सौजं धनं वाक्य - मुक्तं भगवताहरिम् ॥

श्रुत्वाकोप समाविष्टः - पुनरप्येव मब्रवीत्
महनीसि महादेव - रसज्ज करुणानिधे ॥

किं न जानासि मे शक्तिं - त्वत्कृपा द्विगुणी कृतं
त्वद्भक्तवर्ण संछन्नो - दैत्यः सत्यं न संशयः ॥

अथाति भक्ति वर्मास्य - शिथिलं पापकर्मणो
ममाप्यस्ति खलु दृथा - भक्तिस्तव महत्तरा ॥

वर्मायते यतस्सोहं - कथं शक्त्या विनार्दितुं
अतस्तेपादयो शप्त्वा - क्षणेन त्वयि पश्यति ॥

हनिष्यामि महादैत्यं - पश्य मे देव! पौरुषं
इत्याकर्ण्य हरेर्वाक्यं - स्नेह निर्भर मानसः ॥

अब्रवीद्वचनं शम्भु - रितिप्रोत्साहयन्हरिः
हनिष्यसि यदि श्रीश - दैत्यः दैवत कण्टकः
अहं दास्यामि ते सत्यं - प्रतिज्ञेयं कृता मया ॥

श्री भगवानुवाच ।

श्लो॥ अहं नयदिदैत्येन्द्रं - निवर्तिष्ये महेश्वर !
सदाकैलास शिखरे - यास्येत्वद्दासदासतां ॥

परस्परं प्रतिज्ञाय - तौदेवौ हरि शङ्करौ
ब्रह्मादिभि स्सुरैः सार्धं - जग्मतुर्दैत्य सन्निधिम् ॥

अथ स्त्री रूप मतुलं - प्राप्य चक्रधर स्स्वयं
अतीव रूप संपन्नं - योगिनामभिमोहकम् ॥

यांविलोक्य स्मरहरः - स्मराविष्टोऽभवद्भृशं
अपश्यदधतां दैत्यौ - विहरन्ती वने स्वके ॥

प्राणयौवन विश्राति - भूमि सङ्कमिका मिव
मदनस्य महानाट्य - प्रवर्तन वरस्यहे ॥

नीलकुञ्चित केशान्त - विराजत्फुल्लमल्लिकां
अर्धचन्द्रपरिस्पर्धि - निटलां पटुलोचनाम् ॥

हे रानुकारिवदनां - पूर्णचन्द्र निभाननां
मन्दस्मित प्रभावां च - मुखराकेन्दु मण्डलाम् ॥

बिंबोष्ठीं कम्बुकण्ठीं च - पीनोन्नत पयोधरां
मृणाल बाहुलतिकां - पल्लवोद्यत्करांबुजाम् ॥

त्रिवली वलनोदञ्च - त्तनुमध्य कृशोदरीं
सुनाभीं सैकतश्रोणीं - वृत्तोरूं चारु जङ्घकाम् ॥

पश्चानुकारि प्रमुदां - प्रमदां मद विह्वलः
इति प्रोवाच विधुरः - मदनोज्ज्वल मानसः ॥
का त्वं? कमलपत्राक्षि! - दैवी वा? मानुषी च व
गान्धर्वी वा? किन्नरी वा? तव वैशेषिकं वद ॥
भजस्व मां वरारोहे - दास्यंते करवाण्यहं
त्रैलोक्याधिपति स्सोहं - दासामे सुर नायकः ॥
भजस्व मां पदेव्वद्य - त्रैलोक्य श्रिय मूर्जितां
इत्याकर्ण्य वचस्तस्य - किंचिल्लज्जावतीव सा ॥
पराङ्मुखी सस्मितास्या - विलास परिवेष्टिता
गार्दभासुर मुद्वीक्ष्य - प्रोवाच सुमनोहरम् ॥

सखी उवाच ः

श्लो॥ साधु दैत्येन्द्र वैतात! - देवीयं च भविष्यति
रति प्रिया सुनिपुणा - भवान्यदिभविष्यसि ॥

गार्दभ दैत्यः :-

श्लो॥ चतुष्षष्टिकलाभिज्ञो - वनितासु रतिप्रियः
षडशीति महाबन्धः - चतुरोहं वरानने ॥
कलाशास्त्र परिज्ञाने - गानविद्यादि नैपुणे
सर्व विद्यासु रम्येषु - वचनेषु सदाशुचिः ॥
रत्यांच मत्समानोऽन्यो - लोकेनास्ति वरानने
रति क्रियासुबहुधा - जिता अप्सरसो मया ॥
अहं हला मदो द्वेलं - कुर्यात्तेयदि सङ्गमं
कथं सहेरियं बाले - मयागाढ प्रमोदिना ॥

मोहिन्युवाच :-

श्लो॥ तथैवास्तु महाबाहो - पिबेमां मंदिरां शुभां
रतिप्रियां मामभीष्टा - मलमेत द्विलंबनम् ॥

इत्युक्त्वासा ददौ तस्मै - चषकं स्वकर स्थितं
मधुपूर्णं पपावेत - दानीय दनुजेश्वरः ॥ ५९

अथ व्रजंती मग्रेतां - ग्रहीतु वरवर्णिनीं
अनुसृत्य व्रजन्मत्तः - पपात विस्मृत: क्षितौ ॥ ६०

विहीन देहस्मरणः - निश्चेष्टः दुष्टराक्षसः
अतीवनिनदन् मद्यं - महिम्ना विचरद्भुवि ॥ ६१

अथ विष्णुः परित्यज्य - स्त्रीरूपं वृकरूप धृत्
महादंष्ट्रो महाकायो - महासत्व मुपस्थितः
महावालो महापादः - वृक: पर्वत सन्निभः ॥ ६२

शिर आरभ्य दैत्येन्द्र - मघर्षयत तं बलात्
सम्पूर्णं दैत्य राजानं - भुक्त्वा गार्दभ निस्वनम् ॥ ६३

निजरूपं दधारासौ - भगवान् शङ्ख चक्र धृत्
गीताम्वर धरो लक्ष्म्या - वनमाला विभूषितः ॥ ६४

थ देवा स्सगन्धर्वाः - तुष्टुवुस्सिद्ध चारणैः
वृषुः पुष्पवर्षाणि - ननृतु श्चाप्सरोगणाः ६५

थान्तरे महादेवः - प्रणिपत्य जनार्दनं
ाह गंभीरया वाचा - दासोह तव माधव ॥ ६६

नुवाच :-

त्तो ननु महादेव - जगतः प्रभवोप्ययौ
दश सम्भवा ह्येते - वयं ब्रह्मादय स्सुराः ॥ ६७

न्महिम्ना हतश्रेयं - दैत्यो गार्दभ निस्वनः
दधीना वय नाथ! - ब्रह्मा देवेश्वरादयः ॥ ६८

गाङ्क्षन्तं सर्वेश - कथं दासं करोम्यहम्
ो रावणनाशाय - यथा दशरथात्मजः ॥ ६९

भवाम्यहं रामरूपो - दासस्त्वं परमेश्वर
हनुमद्रूप मास्थाय - कुरु मे सख्य मीश्वर !
एवं सति प्रतिज्ञातं - सत्यं भवति नान्यथा
त्वदुल्लङ्घन मस्माकं - न भवेदिति सुव्रत !
साक्षात्तव महादेव - दास भावो निरूप्यते ॥

श्री पराशरः :

एवमस्त्विति तं प्राह - भगवान् वृषभध्वजः
परस्परं समालिंग्य - प्रयातौ श्रीधरा भवौ ॥
तदद्भुतं समालोक्य - सुराजग्मु र्यथागतं
परस्परं प्रशंसंतः - शिवकेशव तुल्यतां ॥
एतत्ते परमः विप्रा - रहस्यं परमं ननु
शोचनीयं प्रयत्नेन - हनूमत्तत्त्व मुत्तमम् ॥
तदा प्रभृति हनुमान् - विख्यातो भुवनत्रये
रामदासो रामदूतो - रामभक्त इति स्मृतः ॥
अन्यद्रहस्यं वक्ष्यामि - कथां पाप प्रणाशिनीं
सावधानमनो भूत्वा - श्रुणुष्व मुनिपुङ्गव ॥
पुरा त्रिपुर संहारे - स्वबाणत्व मुपेयुषे
विष्णवे राम रूपाय - करिष्यन् प्रत्युपक्रियाम् ॥
अखिलैः प्रमदैः श्शम्भुः - हनुमद्रूप माययौ
तथा प्रत्युपकारं सः - विधायाति कृतज्ञतां ॥
स्वं च प्रकटयन्नास्ते - रामनाम जपप्रियः
शिव एव हरिस्साक्षात् - हरिरेव शिव स्मृतः ॥
उभयोरन्तरं नास्ति - भेदकृत्पाप मश्नुते
तस्माद्धरिहराभेदो - विज्ञेयो मोक्ष कांक्षिभिः ॥

विज्ञात मनयोर्यत्तु - रूपं तदुभयात्मकं
उपास्य हनुमत्संज्ञ - भोगमोक्षप्रदं नृणां ।।
यत स्तै श्शम्भु चिह्नैश्च - विष्णु चिह्नै रलंकृतः
अतस्तदुभयात्माहि - विज्ञातव्यो मनीषिभिः ।।
हनुमान् रघुनाथश्च - द्वावेतौ हररूपिणौ
आद्यो वर्णस्तु हनुमान् - द्वितीयो रघुनन्दनः ।।
उभयोरप्यर्चनं तु - हराराधन मेवहि
हरस्वरूपोऽपि हरिस्वरूपः - भवेद्धनूमानिति यस्यचि
दृढोऽभवत् लोकहितस्स एव- सएवसंसार मुपेतसारम्

श्री मैत्रय: :-

अवतारेष्वनन्तेषु - रामस्य परमात्मनः
भूतेषु च भविष्यत्सु - प्रतिकल्पं महामुने!

श्री पराशरः :-

श्लो।। बहुरामावताराणां - प्रतिकल्पं च भाविनां
हनुमानेक एवास्ति - कुर्वन्च प्रकृतिं परां ।।
चतुर्मुखत्व मापन्ना - स्तदंशा एवं केवलाः
ब्रह्माण्डे सृष्टि कर्तारः - कल्पेकल्पे भवंति ते ।।
आधारयन्ते हनुमत्पदाब्जे
कथं नु दैन्यं कलयामि लोके
आश्रित्य कल्पद्रुम मूलवेदि
मातप्यते कः खलु भानु भाभिः ।।

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
रामदासत्व प्रकार कथनं नाम एकादशोत्तर
शततमः पटलः

* * *

# श्री पराशर संहिता

## व्दादशोतरशततमः पटलः

-: विश्वरूप कथनम् :-

मैत्रयः :-

श्लो॥ ब्रह्म विष्णु हरादीनां - पुंसां कारणरूपिणां
श्रूयन्ते विश्वरूपाणि - तत्रतत्र महामुने !
न श्रूयते क्वचिद्वापि - विश्वरूपं हनूमतः
यद्यस्तु श्रोतु मिच्छामि - वद कौतूहलं मम ॥

श्री पराशरः :-

श्लो॥ मैत्रेय विश्वरूपाणि - बहुवारं कपीश्वरः
दर्शयामास तत्राहं - किंचिद्वक्ष्यामि तच्छृणु ॥
शतानन वधेः पूर्व - विश्वरूप मदर्शत
रक्षसामति दुर्दर्षं - जगत्रय भयङ्करम् ॥
बहु वक्त्रं बहुभुजं - बहु पादाक्षि नाशिकं
रामायदण्डकारण्यै - शम्भुना दर्शितं यथा ॥
पुनश्च परमं रूपं - मेरूत्पाटन कर्मणि
ज्वलत्कालानल प्रख्य - महा भीकर लोचनम् ॥
ब्रह्माण्ड माप्त मतुलं - जलदोत्कट निस्वनं
ब्रह्मणी सर्वदेवानां - मुनिनाम प्रदर्शतु ॥
यन्निरीक्ष्य तदा सर्वे - मुनयोऽधीत मानसा॥
अब्रुवन् अन्जनासूनों - त्राहिनः शरणागतान् ॥
रौद्र परम दुर्धर्षं - रूपं ते ति भयानकं
न समर्था वयं द्रष्टु - मुपसंहार मारुते ॥

इति संप्रार्थितो देवैः - ब्रह्माद्यैर्महिति स्तथा
अर्जुनेन यथाकृष्णः - स्वच्चिक्षेप स्वकं तनुम ॥
इन्द्र व्याकरणाभ्यासे - कदाचि द्भास्करस्यच
उदयास्ताद्रि शिखर - द्वन्द्वन्यस्तांघ्रि पङ्कजम् ॥
स्वरोम कूप विवर - निर्यद्ब्रह्माण्ड मण्डलं
दंष्ट्रा करालवदनं - सोम सूर्याग्नि लोचनम् ॥
उद्धरांतर संचारि - ब्रह्मेन्द्रादि मरुद्गणं
अदर्शयन् महाभीम - मत्त् वै रूप मद्भुतम् ॥
रेवानदि तटे पूर्वं - विहरन् वनितागणैः
परः सहस्र संख्याकैः - तावद्या परमद्वयम् ॥
सहस्र भुजमण्डल्या - तथै वैकांश मार्जिषन्
रममाणो दिवि सुरै - रद्दस्त स कौतुकैः ॥
तथा देवाश्च गन्धर्वाः - पुष्पवर्षाण्यवाकिरन्
अवादयंच पटहा - ननृताश्चाप्सरोगणाः ॥
मैरावण वधार्थाय - पाताले स्वमदर्शयत्
रूपमत्यद्भुतं रक्षो - गण हृद्भेदन क्षमम् ॥
सत्यलोकं मत्तः पूर्वं - आनेतु राममुद्रिकां
सनकाद्यैः परिवृतं - भीषयन् पङ्कजासनम् ॥
सुघोरं दर्शयामास - रूपं वाम गिरिं प्रभुं
यद्विश्च मुनिभिः सार्कं - मूर्छितो भूत् प्रजापतिः ॥
एवमादिष्य नंतानि - विचित्राणि महात्मनः
रूपाणि वायुपुत्रस्य - अज्ञेयानि सुरैरपि ॥
तत्तत्कार्यविशेषेषु - तत्तद्रूपाणि चिन्तयन्
अनुगुण्येन पुरुषः - परांप्रीतिमवाप्नुयात् ॥

अन्यद्रहस्यं वक्ष्यामि - सर्व लोकोपकारकं
मन्त्रसिद्धि प्रदं वक्ष्ये - लघुमार्गं तव द्विज!
वैशाखे कृष्णपक्षेतु - दशम्यां वै समारभेत् ॥
समापयेच्चतुर्दश्यां - पञ्चरात्र मिदं व्रतम् ॥
स्तोत्रं वा कवचं वापि मन्त्रं वा सूक्तमेव वा
एकोत्तर विधानेन - जपं कृत्वा तु मांत्रिकः ॥
दशांश तर्पणं होमं - कुर्याश्च द्विजभोजनं
एवं कृते मुनिश्रेष्ठ! पुनश्चर्यं फलं लभेत् ॥
सर्वेति हनुमन्मन्त्रा - स्सिध्यन्त्येव न संशयः
आरभ्य दशमीं यावच्चतुर्दशि जपस्स्मृतः ॥
अमायां तर्पणं होमो - द्विजभोजन मिष्यते
इदं व्रतं हनूमतः - प्रोक्तं सर्वव्रतोत्तमम् ॥
पञ्चरात्र मिति प्राहुः - पञ्चपातक नाशनं
विद्याकामो लभेद्विद्यां - दरिद्रो धनवान् भवेत् ॥
रोगी तु मुच्यते रोगात् - बन्धो मुच्येत बन्धनात्
पुत्रार्थी लभते पुत्रान् - जयार्थी जयमाप्नुयात् ॥
बहुनात्र किमुक्तेन - सर्वान्कामान्लभेन्नरः
कृत्वा वा कारयित्वापि - व्रतमेतन्महाफलम् ॥
अन्यद्रहस्यं वक्ष्यामि - सर्वलोकोपकारकं
दशम्या मञ्जनागर्भात् - उत्पन्नोहपुमान्स्वयम् ॥
अमायां प्रातरुद्यन्तं - भानुमन्तं निरीक्ष्य सः
फलबुध्या भक्षणार्थं - प्रवृत्तो भगवान् हरिः ॥
तस्मात्तेषु दिनेष्ववश्य - पूजनं सुमहाफलं
अन्यद्रहस्य वक्ष्यामि - शृणु मैत्रेय भक्तिमान् ॥

ज्येष्ठ शुद्ध दशम्यांच - भगवान् भास्करो निजां
सुतां सुवर्चला नाम्नीं - प्रादात्प्रीत्या हनूमते ॥ ३

अथ तस्यांति भक्तो - विवाहोत्सव माचरेत्
मूर्ति सुवर्चलायाश्च - तथैव च हनूमतः ॥ ३

कारयित्वा सुवर्णाद्यैः - स्वगृह्योक्त विधानतः
नृत्य गीतैश्च वाद्यैश्च - कारयेच्च यथाविधिः ॥ ३

कृत्यंतु द्विविधं प्रोक्तं - एकं द्रष्टुं मनोहरं
अङ्गभङ्गात्मकं चान्य - त्सर्वपाप प्रणाशनम् ॥ ३

विवाहं वायुपुत्रस्य - ब्राह्मणानपि भोजयेत्
पौर्णमास्यां नाकबलिं - विवाहाच बूधं चरेत् ॥ ३

एवं यः कुरुते तस्य - गेहे लक्ष्मी स्वयं वशेत्
भक्त्या भोगान् यथा कामान् - हनुमान्लोक माप्नुयात् ॥ ३

एष्वेव दिवसेष्वेकं - मन्त्रं यत्नेन योजपेत्
अष्टोत्तरशतं वापि - हुनेद्व्रत समाहितः ॥ ४

तस्य सिद्धि करी चैव - नात्र कार्या विचारणा
जपं च मूर्तिपूजा तो - होमं कोटि गुणाधिकः ॥ ४

होमाभावे भवेत्कोटिं - गुणितं द्विज भोजनात्
तस्मात्सर्वं प्रयत्नेन - होमश्च द्विज भोजनम् ॥ ४२

कर्तव्यं सिद्धि कामेन सर्व मन्त्रेष्वयं क्रमः
परार्थं न जपेन्मन्त्रा - नपि वा प्राण संकटे
अन्यथा नैव फलदाः - प्रदुग्धा इव धेनवः ॥ ४३

परे :-

परार्थं प्रजपेद्यस्तु मन्त्र लोभा त्प्रमादपि
सतस्य वन्ध्यतामेति - छागकण्ठ स्तनाविव ॥ ४४

गुरुदैवत मन्त्राणा - मैक्यं ध्यात्वा प्रयत्नतः
देवताध्यान पूर्वं तु - जप्त्वा सिद्धिमवाप्नुयात् ॥
गुरुं सम्पूज्य यत्नेन - वित्तशाठ्य विवर्जितः
वस्त्रभूषण दानाद्यैः - मन्त्रसिद्धि मवाप्नुयात् ॥
गुरौ तुष्टे पुरश्चर्या - विनापि मुनिपुङ्गव
सर्वे मन्त्रा स्सु सिध्यन्ति - तस्मात्सन्तोषयेद्गुरुम् ॥

यदा न तृप्ति र्जन्तूनां - शुष्कान्नेन विनांबुना
तथा शुष्कं च वैराग्यं - मोक्षाय प्रभवत्यलम् ॥
पुत्र मित्र कलत्राद्यैः - सक्तः संसारसागरे
स्थितं जले प्यहोरात्रं - पद्मपत्र मिवांभसा ॥
आत्म ध्यान परिश्रांतं - ईयान्सच्चिन्त भालकं
मुहुर्विषय दानेन - पुनर्ध्याने प्रवर्तयन् ॥
आत्मारामः सदा योगी - नित्यानुष्ठानतत्परः
संसार योगी सर्वत्र - ब्रह्मभूयाय कल्पते ॥

एकः प्रजायते जन्तुः - एकयेव प्रमीयते
एकेन भुङ्क्ते सुकृतं - एक येव दुष्कृतम् ॥
मृतंशरीर मुत्सृज्य काष्ठ लोष्ठ समक्षिते
बांधवारि मुखात्सन्ति धर्म स्थ मनुगच्छति ॥
गोब्राह्मण वधंचैव - स्त्री रोदन कचग्रहे
पश्यन्नपि स्थितो यस्तु - नास्तितस्य विनिष्कृतिः ॥

प्राणायामासन जयं - इन्द्रियाणां विशेषतः
निद्राहार जयं कृत्वा - शीघ्रसिद्धि लभेन्मनुः ॥
गानेन मंत्रं जप्यात् - देवताप्रीति कृद्भवेत्
तत्रापि वश्यकार्येषु - गान जाप्यं प्रशस्यते ॥

तस्माद्यत्नेन कर्तव्यं - गान जाप्यं शताधिकं
सिद्धिकामो भवेन्नूनं - मन्त्रं गानेन संजपेत् ॥
शीघ्र सिद्धिप्रदो नृणां - इत्याह भगवान् शिवः
द्रोहकार्ये न कर्तव्यं - गान जाप्यं कदाचन ॥
गुरौ चोपासके चाग्नौ - भक्तौ ज्ञानिनि मातरि
भ्रातृ वर्गेच सख्यै च - न कुर्यात् द्रोह चिन्तनम् ॥
पुण्य नद्यां च तीर्थे च - दैवज्ञे च गुरौ तथा
श्रद्धां प्राप्नुयान्मर्त्यः - कुर्वन् परिचयं बहु ॥
कृतघ्नश्च गुरुद्रोही - ब्रह्महंता च वचकः
एभिश्चतुर्भिः स्सख्यंतु - नैव कुर्याद्विचक्षणः ॥
परद्रव्यापहारीतु - न चोर इति कीर्त्यते
नित्य कर्म विहीनोयः - स चोरः नात्र संशयः ॥
अन्नदाता सदाध्यायी - मंत्री चापि परोपकृत्
चत्वारः स्मरणादेव - सर्वपाप प्रणाशकाः ॥
ध्यान पूजादिनोभागा - दुष्ट मन्दादिनस्य यः
ननयेद्दैवता द्रोही - सकथं फलमिच्छति ॥
संसारबद्धो जन्तुर्यो - हनुमान् भक्ति वर्जितः
किंचित्सुखं तस्य नास्ति - दुःखमेवाप्नुयात्सदा ॥
हनुमद्भजनार्थं हि - न कालो नियम श्शुचिः
प्रतीक्षं ते च ये कालं - तदेव ह्यात्म वञ्चकाः ॥
परभाग्योपजीवी च अभ्यास पिशुन स्तथा
परान्ना स्त्री व्यसनी - पञ्चैते दुःख भागिनः ॥
दुर्भाषा जनसंबाधं - मत्तद्रव्यस्य भोजनं
अशुचित्व मथांनायुः - चत्वारो जपनाशकाः ॥

एकान्ते निर्जरे रम्ये - निर्बाधे निरुपद्रवे
मन आह्लादके देशे - जपं कुर्वीत बुद्धिमान् ॥
चण्डाल म्लेच्छपतित - शूद्राद्यैर्भाषितं मुने
निद्राजृम्भण हे कार्ति - जप काले च वर्जयेत् ॥
रम्भावनेषु चोद्याने - पुष्पपूर्ण च कानने
जप कुर्वीत मतिमान् - अत्यन्त फलमश्नुते ॥
सत्कर्म निरतो यस्तु - नियमेषु प्रवर्तते
योगक्षेमं वहत्यस्य हनुमानेव सर्वदा ॥
वेद शास्त्र विरुद्धेन - स्वमनो येन तिष्यति
तमेव धर्म माचारं - प्रवदन्ति मनीषिणः ॥
कनिष्ठा वेदितं गन्धं - तुभ्य मात्मानिवेदितं
प्रीत्या गृहाण देवेश! यथोक्त फलदो भव ॥
विषयादि समुद्भूताः - ये आनन्दाश्चतुर्विधाः
हनूमद्भजनानन्द - सहस्रांशेन तेऽसमाः ॥
विषयानन्द अभ्यासीकानन्द अभिमानिकौ
नन्दमानोधिकानन्दः - ब्रह्मानन्दोच्यते बुधैः ॥
विषयानन्द इत्युक्तो - विषयेषु समुद्भवः
स्वभक्ति विद्या स्मरणात् - आनन्दोऽभ्यासज स्मृतः ।
सत्कुलाद्यभिमानेन - अभिमानिक उच्यते
मनोरथ गृहा द्यैस्तु - मनोरथ स उच्यते ॥
पापाय दुःखायच मे प्रचारो बाधस्तुते यं भगवन् दय
तस्मान्न सम्मोहय मां हनूमान् अघोरसंसार समुद्रमः
इति समस्त महागमतोयदि प्रमदनोद्धसुधारस मादर
समुपदिष्ट महोक्तपयैवते सपदिविप्र! मयाहृदिधारय
इति श्री पराशर संहितायां पराशर मैत्रेय सवादे
विश्वरूप कथन नाम द्वादशोत्तरशततमः पटलः ॥

# श्री पराशर संहिता

## त्रयोदशोत्तरशततमः पटलः

### -: मृत संजीविनी विद्या कथनम् :-

श्री पराशरः :-

श्लो।। मन्त्रान्तरं प्रवक्ष्यामि - श्रुणुष्व मुनिपुङ्गव!
आपन्निवारणं नाम - हनूमन्मंत्र मुत्तमम् ।।
सावधानमनाभूत्वा - गोप्यं लोकोपकारकं
सर्वोपसर्ग शमनं - सर्वापद्विनिवारणम् ।।
समस्ताभीष्ट फलदं - सर्वशत्रु निवारणं
आदौ प्रणवमुच्चार्य - नमो भगवते पदं
अञ्जनासून वेचेति - वायुःपुत्र पदं ततः
पिङ्गाक्ष मम शब्दं च - सकलापन्निवारणम् ।।
कुरुशब्दं द्विरुच्चार्य - समस्ताभीष्ट मत्यदा ।।
प्रयच्छ चेतियुग्मेन - वह्निजायां समुच्चरेत्
ऋषिरस्यमनो ब्रह्मा - गायत्री छन्द उच्यते ।।
हनुमान् देवता प्रोक्तो - प्रणवं बीज मुच्चरेत्
अञ्जना सूनु शक्ति श्च - नमश्शब्दश्च कीलकम् ।।
ध्यानं न्यासं विना मन्त्रं - न जपेच्च कदाचन
ध्यानं तु देवता रूपं - न्यासो देहस्य रक्षकः ।।
तस्मात्सर्व प्रयत्नेन - ध्यानं न्यासं करोति यः
मन्त्रसिद्धिर्भवेत्तस्य - सत्यं सत्यं मयोदितम् ।।

ध्यानम् :-

श्लो।। अमल कमल वर्णं - प्रज्वलत्पावकाक्षं
सरसिजनिभ ववत्रं - सर्वदा सुप्रसन्नम् ।।

पटुतर घन गात्रं - कुण्डलालंकृताङ्गं
रणजय करवालं - रामदूतं नमामि ॥

लक्षमेकं पुरश्चर्या - दशांशं तर्पणं बुधः
तद्दशांशं हुनेत्कर्म - तद्दशांशं तु भोजनं ॥

गुरुं संपूज्य यत्नेन - गृह्णीयान्मंत्र मुत्तमं
अथ यन्त्रं प्रवक्ष्यामि - सर्वकामार्थ सिद्धये ॥

यन्त्रं विना भवेत्पूजा - मन्त्र सिद्धिर्नजायते
वर्तुलं विलिखे त्पूर्वं - त्रिकोण च लिखेत्ततः ॥

ततो वर्तुल मालिख्य - षट्कोणं लेखयेद्बुधः
तद्बहिर्वृत्तमालिख्य - ततो द्वादश पत्रकम् ॥

तद्बहिर्वृत्तमालिख्य - भूपुरद्वय मालिखेत्
चतुर्द्वार समायुक्तं - मन्त्रवर्णान् लिखेत्प्रमात् ॥

प्रणवं विलिखेन्मध्ये - षट्कोणेषु षडक्षरान्
लिखे द्वादश मात्रेषु - क्रमाद्द्वादश वर्णकान् ॥

अवशिष्टान् मंत्रवर्णान् - भूपुरेषु समालिखेत्
प्राणप्रतिष्ठां कुर्वीत - प्रत्यहं पूजयेद्बुधः ॥

गुरुं संपूज्ययत्नेन - गृह्णीया च्चक्र मुत्तमं
मन्त्रस्य यंत्रः कर्तव्यः - इत्येवं नारदोऽब्रवीत् ॥

तत्तद्यन्त्र परिज्ञाने - मंत्र राजस्य यंत्रकं
अर्चयेत्सर्व मंत्रेषु - मन्त्रज्ञो भक्ति संयुतः ॥

चक्र ज्ञानेतु शैवानां - चक्रं पञ्चाक्षरस्य हि
चक्र ज्ञानेतु शाक्तानां - श्रीचक्रं समुदाहृतम् ॥

अष्टादशाक्षरे चक्रे - गोपालानां प्रपूजनं
षडक्षरे तु रामाणां - चक्र पूजनमुच्यते ॥

महागणपते चक्रे - गणेशानां समर्चनं
अष्टाक्षरेतु सौराणां - नृसिंहानां अनुष्टुबिः ॥
तथा हनुमतानां च - सप्त मंत्रात्मके शुभे
चक्रे संपूजनं प्रोक्तं - इत्थं सर्वत्र निर्दिशेत् ॥

श्री मैत्रेयः :-

श्लो॥ भगवन् सर्वशास्त्रार्थ - तत्त्वज्ञ करुणानिधे
पराशर मुने ब्रूहि - अति वात्सल्य गौरवात् ॥
मृत संजीविनीं विद्यां - सर्वमन्त्रोत्तमां शुभां
यस्याश्श्री हनुमान् साक्षा - द्देवता रामपूजितः ॥
लक्ष्मण प्राणदो द्रोण - सर्वतो हरितौषधः
यस्यास्संस्मरणादेव - मृत संजीवयेत्पुमान् ॥
तद्विद्या या मम ब्रूहि - माहात्म्य देशिकोत्तमं ॥

श्री पराशर :-

श्लो॥ साधु साधु महाप्राज्ञ - मैत्रेय तवतुदृढा
हनूमतस्तुतौ लग्नात्तीर्णोसि भव सागरम् ॥
इदं रहस्यं परमं - अनाख्येयं न कस्य चित्
अनर्हं कथनात्सद्यो - देवता कुप्यति ध्रुवम् ॥
भक्तो सीति मया किंचि - त्तराव्यं न विद्यते
सावधानमना भूत्वा - श्रुणु श्रद्धा पुरस्सरम् ॥
आदौ प्रणवमुच्चार्य - श्रीसुधा धायुबीजकं
उच्चार्य चक्रमात्पश्चाल्लक्ष्मण प्राण दायकम् ॥
संजीविन्यौषधेनेति - ततश्च स करेति च
प्राणि जीवनदे त्युक्त्वा - हनूमान्मामितीरयेत् ॥
रक्ष शब्दं द्विरुच्चार्य - वह्निजायां समुच्चरेत्
अष्टत्रिंशद्वर्णयुक्तो - मन्त्रोयं मृतजीवनः ॥

मृत संजीविनी नामो - ह्यस्य मन्त्रस्य वै मुने
नव ब्रह्माण ऋषयः - छन्दोमृत बिराट्तथा ॥
लक्ष्मणप्राणदाता च - हनूमान् देवता भवेत्
प्रणवं बीज मित्युक्त्वा - स्वाहा शक्ति रुदाहृतः ॥
श्रीसुधा वायु बीजानि - कीलकं परिकीर्तितं
अङ्गन्यासं करन्यासं - मूल मन्त्रेण चैव तु ॥

ध्यानम् :

श्लो॥ द्रोणाद्रि मादाय निजेन मूर्ध्ना
वेगेन धावन्त मनेकिना स्वां
श्रीराम नेत्रांबुज पीयमानं
सौमित्रि संजीविनि माश्रयामि ॥

ग्रन्थांतरे :

श्लो॥ वेगानीत महौषधाद्रि - शिखर स्पर्शाव्रणद्गात्रकं
श्रीरामानुज नेत्र पङ्कज तमो - निर्भेदति ङ्मीर्भितम्
सुग्रीवाङ्गद मुख्यवानर गणैः - आलिंग्यमानं मुदा
रामप्रीतिकरं नमामि शिरसा - नित्यं हनूमत्प्रभुम् ॥
संजीयाद्रि समानीय - सर्वंवानरजीवदं
लक्ष्मण प्राणदातारं - हनूमन्त महं भजे ॥
अयुतं तु पुरश्चर्या - तर्पयेत्तद्दशांशकं
नारिकेलोदकं वापि - गोक्षीरं वा गुडोदकम् ॥
तावत्संख्यं हुने दग्नौ - पायसं त्रिमधुप्लुतं
यथाशक्ति ब्राह्मणां श्च - भोजयेन्मंत्र वित्सुधीः ॥
ज्वरापस्मार हिक्काद्याः - क्षय कुष्ठादयोपि वा
प्रमेहवात रोगाश्च - नश्यंत्येव न संशयः ॥

मन्त्रेणानेन सम्मंत्र्य - भस्म वा जलमेव वा
भस्मवापेत्तना तायं - पाययेद्रोगिणं बुधः ॥
क्षिप्रं रोग विनिर्मुक्त - श्चिरायु स्सभवे धृवं
गृहदुःखानि संत्यज्य - हनुमध्यान तत्परः ॥
रम्भावने मन्दवारेऽश्वत्थ मूलेऽर्कवासरे
जपेन्निश्चल चित्तेन - पुत्रजीवाक्षमालया ॥
मन्त्रं हनूमतः काचित् - अष्टाधिक शतं बुधः
महत्तर प्रयोगेन - कार्यार्थी च जपेद्बुधः ॥
तत्फलं वर्णितु ब्रह्मन् - ब्रह्मणापि न शक्यते
अथयन्त्रं प्रवक्ष्यामि - मैत्रेय मुनि पुङ्गव ॥
पञ्चकोणं लिखेत्पूर्वं - तद्बहिर्वृत्त मालिखेत्
ततष्षोडश पत्रं च - वृत्तद्वय मनन्तरं ॥
चतुर्द्वार समायुक्तं - भूपुरं विलिखेत्ततः
मंत्रवर्णं लिखेद्विद्वान् - क्रमं वक्ष्यामि सुव्रत ॥
यन्त्रमध्ये लिखेत्तारं - पञ्च कोणेषु पञ्चकं
वर्णां लिखित्वा मन्त्रस्य - यथाक्रम मतंद्रितः ॥
ततः षोडश गन्त्रेषु - द्वौद्वौ वर्णान् ततः परान्
क्रमेणैव लिखेद्विद्वान् - प्रागारभ्य प्रदक्षिणम् ॥
तथा भूपुर मध्येति - विलिखेदानुष्टुभं बुधः
प्राण प्रतिष्ठां कृत्वा च - मंत्री प्रत्याहमर्चयेत् ।
गुरुं संपूज्य यत्नेन - गृह्णीयाच्चक्र मुत्तमम्
मन्त्र प्रभोऽयं मयोदितस्ते मैत्रेय माहात्म्य मणि श्रुणु
शुश्रूषयेत्तुभ्य मिहेतिहासं वक्ष्यामि सर्वाघ निवृत्ति हे

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
मृतसंजीविनी विद्या कथनंनाम त्रयोदशोत्तर शततमः पटल

* * *

# श्री पराशर संहिता

## चतुर्दशोत्तरशततमः पटलः

### —ः मृत संजीविनी विद्या प्रभाव कथनम्-२ :—

श्री पराशरः :

श्लो॥ अत्रेतिहा संवक्ष्यामि - रहस्यं परमाद्भुतं
पुरा रेवानदी तीरे गान्धर्वाख्ये पुरोत्तमे ॥
आसीद्विजवरः कश्चित्सुदन्त इति विश्रुतः
निर्ममो निरहंकारः - परस्त्री विजितेन्द्रियः ॥
संसार यात्रा मुद्दिश्य - तत्र तत्र च चारहृ
अभितस्तस्थ जगति - भूपाद्भुपं ततः परम् ॥
प्रतिग्रामं प्रति गृहं - भूयान् लोकोप्यजायत
इत्थं संचर माणोपि - तेऽशनोपहृता द्विजः ॥
न किंचिदपि न प्राप - पूर्व कर्म वशानुगः
आशपंस्तं समालोक्य - समायान्त नृपाः क्रुधाः ॥
बालाश्च ताडयन् लोष्टैः पूर्वं जन्मौघ संचयात्
यद्यत्सकुरुते कर्म - तत्तन्निष्फलताङ्गतम् ॥
अथ मग्न मनाभूत्वा - क्षुत्पिपासार्दितो द्विजः
भरद्वाजाश्रमं शांतो - ययाऽांडज संकुलं ॥
ततो मध्याह्न समये - भोजयेन्नति धीन्मुनिः
विप्र निरसयामाल - भारद्वाज स्सुदंतकम् ॥
तद्दृष्ट्वा चिन्मयो - भूत्वा सुदन्तो ब्राह्मणोत्तमः
प्रणम्य मुनि शार्दूल - मब्रवीद्विश्रुतो गिरम् ॥

सुदन्तोवाच :-

क्षुत्पिपासार्दितेह्यत्र - पर्यटन्नह मागतः
महींश्च सकलान् क्वापि - मया लब्धं न भोजम् ॥

का च मात्रं धनं बा पि - जलं बा मुनि पुङ्गव
शपंति प्रत्युत जनाः - तारयन्त्याक्रुशंति च ॥
आस्तां तदधुना स्वामिन् अतिथीनर्चयन् भवान्
परः सहस्रान्संप्रीत्य - मान्निष्कासयते कुतः ॥
एतद्दृष्ट्वा विचित्रं मे - बहुदुःखं समागतं
अधीत्यवेद शास्त्राणि - शुश्रूषां च भवादृशां ॥
विधाय ज्ञानवान् भूत्वा - ससारार्थं मटन्नपि
न लभेत्य च किंचि द्वा - किमिदं मम दुष्कृतम् ॥
तत्तु मत्पोष्य वर्गस्य - पातकं वा द्विजर्षभ।
येतन्मेतत्वतो ज्ञात्वा - योगमार्गेण सुव्रत ॥
हितं ब्रूहि भरद्वाज त्वा महं शरणं गताः
ये तत्तस्याति दीनस्स - सुदंतस्य स्थितिं वरां ॥
भरद्वाजस्समाकर्ण्य - क्षणं दत्वाव लोकये
तत्पूर्वजन्म बृत्तांत - मब्रवीच्च ततोद्विजम् ॥

भरद्वाजः-

उत्तिष्ठोत्तिष्ठ विप्रस्त्वं - स्नात्वा भुंक्ष्य यथासुखं
भुक्तस्य ते समाचारं - सर्बं वक्ष्यामि तत्परः ॥
इत्युक्त्वा स कमण्डल्या स्तीर्थतो येन तद्विजः
अभिषिच्य समाश्वास्य - वासोदत्वा कृताह्निकम् ॥
पूजयामास तं विप्रैः - सहान्यैः मुनिपुङ्गव
ततोन्नं षड्रसोपेतं - भोजयित्वा द्विजान् मुनिः ॥
भरद्वाजः स्वयं भुंक्त्वा तेषा माज्ञा पुरस्सरं
सुखासीनेषु विप्रेषु - भृशीषु मुनि पुङ्गवः ॥
स्वय मप्यासनं छेजे - तैराज्ञातो मुदान्वितः
तेषु संवीक्ष्य देवर्षिः - सुदन्तं [illegible] ॥

अब्रवीद्धषयन् विप्रान् - सर्वज्ञ करुणानिधिः
सुदन्त मुनि शार्दूल - पुरा त्वं क्षत्रियोत्तमः ॥
धर्मनिष्ठ इति ख्यातः - द्विजपूजा परायणः
हनूमद्भक्ति युक्तानां अवमान करस्सदा ॥
कोऽसौ हनूमन् देवोऽस्ति - कथमाराध्यते बुधैः
विहाय शङ्करं विष्णुं - देवीं वा जगदम्बिकाम् ॥
गणेश मर्कं सत्याख्य - सुधा निद्रादिकानपि
पूज्यते हनुमान् लोके - यदि विप्रैर्विशेषतः ॥
सुग्रीवो जाम्बवान्नीलः - कथं नाराध्यते बुधैः
मैन्दोऽङ्गदश्च द्विविदः - तथान्ये हरियूथपाः ॥
विभीषणश्च धर्मात्मा - येष्वेव हनुमान् यतः
इति नित्यं दुरालापैर्निदन् वायुसुतं परं ॥
अज्ञात्वा तस्य माहात्म्यं बोध्यमानोपि सज्जनैः
एवं बहुतिथेकाले गते च शत्रुभिर्जितः ॥
हृत राज्यो महारण्यैः - क्वचन्निष्काशितो मृतः
द्विजपूजा प्रभावेन - ब्राह्मणत्वं गतो भवान् ॥
हनुमन्निंदयानूनं - दारिद्र्यं परमं गतः
मृत संजीविनी विद्यां - दास्यामि तव सुव्रत ॥
यतस्त्वं निर्धनो विप्रा - मृगयेव न संशयः
उभयोरन्तरं नास्ति - निर्धनस्य मृतस्य च ॥
अतस्त्वां मृतसंकाशं - दत्वा सम्पद मुत्तमां
जीवयिष्यति मन्त्रोयं - मृत सञ्जीवकां शुभां ॥
इत्युक्त्वाथ परेद्युस्तं - दीक्षयित्वा मुनीश्वरः
मृत संजीविनीं विद्यां - उपदिश्याब्रवीत्पुनः ॥

इतो गच्छ महाप्राज्ञ - साकेतपुर मुत्तमम्
तत्र सारवतोयेषु - स्नात्वा जप मनुत्तमम् ॥
इत्युक्तो गुरुणा विप्रः - प्रणम्य भुविदण्डवत्
अयोध्या नगरं प्राया द्धनूमान् यत्र संस्थितः ॥
स्नात्वा त्रिषवणं तत्र - द्विजो निश्चल मानसः
दध्यौ वायुसुतं धीरः - मृत संजीविनीं जपन् ॥
एवं तपस्तुत स्तस्य - मासत्रय मगात्ततः
स्नानार्थं मेकदा गत्वा - शवद्वय मपश्यत ॥
ततस्नात्वाति शीघ्रं सः - मृतसंजीविनीं जपन्
चिक्षेप शवयो स्तोयं - तदुत्तिष्ठ तु रंजसा ॥
प्रणतौ दण्डवद्भूमौ - तावालोक्याति विस्मितः
पप्रच्छकौ युवां वीरौ - किं कुलीनौ कुतो मृतौ ॥

पुरुषा ऊचतुः :-

स्वामिन् आवां पुलिंदौ हि - भ्रातरौ द्वावपुत्रकौ
ज्येष्ठ स्सुबाहु नामा च - द्वितीयो मृगमर्दनः ॥
उपायोनास्ति तनयः - पुत्रवा मुनिपुङ्गव
अपुत्रत्वेन दुःखार्तौ - निर्धनौ सह भार्यकौ ॥
पुत्र भावेन यं कंचित् - नित्यं पोषितु मुत्सुकौ
सुबाहुश्शारिकां चैव - मार्जालं मृगमर्दनः ॥
स पोषयन्तौ स्थितवान् - बहु कालं महामुने
कदाचिच्छारिकां दृष्ट्वा - मार्जालो भक्षयां निशि ॥
ताडितः सोपि मार्जालः - सद्यएव सुबाहुना
ततोन्योन्यं सुबाहुश्च - मृगमर्दो महामुने ॥
आवां कृत महायुद्धौ - मार्जालं शारिकामपि
उद्दिश्यान्योन्य बाहुभ्यां - निहतावति साहसा ॥

तत्पपात मुनिश्रेष्ठ! पुनरुज्जीविता बभू
इति श्रुत्वा तयोर्वाक्यं - रहस्यं मुनिपुङ्गव ॥
अब्रवीद्वायु तनया - द्वरमेतौ पुलिंदकौ
यतस्त्वपोषितौ शारि - मार्जालौ निहताननौ ॥
परस्पर हतौ वीरौ - स्वाभिमाना द्वशावपि
मार्जालः शारिका वापि - मतश्रेष्ठतरौ भुवि॥
अत्यन्त प्रीतियुक्तोहि - यतस्तत्पोषकौ तयोः
निर्भाग्योह् य तस्स्वामी - हनूमान् मय्युपासते ॥
न करोति दया किंचि - दहो मत्पादगौरवं
अथवा मर्कटस्सोयं - हनूमान् भक्तवत्सलः ॥
कथं भविष्यति वृथा - कष्टोयं मम दुष्करः
इति बाधापरे विप्रे - दयार्द्र हृदयः कपिः ॥
आविर्बभूव हनुमान् - अष्टादश भुजान्वितः
कोटिसूर्य प्रतीकाशो - नानाभरण भूषितः ॥
पीताम्बरधर स्रग्वी - साक्षाच्छौरिरिवा परः
तं दृष्ट्वा विस्मितो विप्रः - पतितः पादयोः भृशं
तुष्टाव परया भक्त्या - स्वापराध विशंकितः ॥

सुदन्तः :-

श्लो॥ नमो नमस्ते देवेश - सृष्टि स्थित्यन्त हेतवे
अक्षराय वरेण्याय - वरदाय महात्मने ॥
योगि हृत्पद्म संस्थाय - भवरोगौषधाय च
भक्तापराध सहने - भवपुत्र नमोस्तुते ॥
रामोपकार शीलाय - लक्ष्मण प्राणदायिने
सप्तकोटि महामन्त्र - स्वरूपाय नमोनमः ॥

गौरीगर्भ महाशुक्ति - रत्नायामित धातवे
वेदवेद्याय यज्ञाय - यज्ञभोक्त्रे नमोनमः ॥
ब्रह्म विष्णु महेशादि - सर्वदेव स्वरूपिणे
शतानन वधार्थाय - नक्षत्रे श्रवणे शुभे ॥
अवतीर्णः पञ्चवक्त्रः - तस्मै हनुमते नमः
नमस्तुभ्यं कृपासार - क्षमस्व ममदुर्नयम् ॥
महापराध संख्याने शक्तिर्नास्ति तवापि हि
अतस्सहाममेवैषां - युक्तं श्री हनुमत्प्रभो ॥
पुच्छाग्नि लङ्कापुर दाहकाय सुरांतकाक्षासुरमर्दनाय
नमोस्तु भीभत्स विनिर्मितेषु सेतूत्थ भीभत्सरसोत्सवा
जनन मरण वर्जितं - शांतरूप विग्रहं
प्लवगगण सुसेवितं - पापसङ्घ नाशनं
कूर्म पृष्ठधारिणं - पार्थकेतु चारिणं
वालखिल्य संस्तुतं - वायुसूनु माश्रये ॥

इन्द्रव्याकरणाधिगत्यवसरे यस्यस्वतो विह्वलं
दृष्ट्वा रूपमहः कपिपति पूर्वाद्रितांघ्रि द्वयं
प्रादादात्म सुतां सुरूपगुण शीलानर्घ्यं रत्नाश्रयां
यस्मै नाम सुवर्चलां हनुमते तस्मै नमः कुर्महे ॥
पापाय दुःखाय च मे प्रचारो भारस्तु तेयं भगवन् द
तस्मान्न संमोहय मां हनूमन् अघोर संसार समुद्रमः

तथैव चेन्नास्ति जगत्कुटुंम्बिनो
मदीय वर्गावन भार भारती ।
कथं ममैषा हनुमान् वदस्व मे
ह्यनात्म भारं वहतेनुकस्यधीः ॥

इतिस्तुत्वा हनूमंतं सुदन्तो नाम वैद्विजः
अष्टादश भुजाकारं प्रत्यक्षं गतवान् हरिः ॥
शक्ति पाशं च कुन्तं परशुमपि हलं तोमरं खेटकं वा
शङ्खं चक्रं त्रिशूलं मुसलमपि गदां पट्टिसम्मुद्गरं च
गाण्डीवं चर्मपद्मं द्वि नव भुज वरैः खड्गमप्यादधानं
वंदेहं वायुसूनुं सुररिपु मथनं भक्तरक्षा धुरीणं ॥
इति निर्वेद मापन्नं - मुनि श्री हनुमत्प्रभुः
प्रत्यक्षमागतप्राह नैव - मर्हसि भाषितुं ॥
भरद्वाजात्त्वया मंत्री - यदाभ्यस्तोद्विजोत्तमः
तदा प्रभृति सान्निध्यं - कृतं तव महामुने ॥
पूर्वजन्म कृते पापे - सर्वस्मिन्नपि वारिते
इदानीं तवदृङ्मार्गं गतोस्मि वरयेप्सितम् ॥
ब्राह्मणोवाच :-
त्वत्पाद कमलेनित्यं - भक्ति देहि महाप्रभो
क्षमस्व सहसाऽज्ञानादपराधान् मयाकृतान् ॥
इत्युक्त्वा सहसाभूमौ - दण्डवत्प्रणिपत्य च
जग्राह पादौ देवस्य - भीत्या स हनुमत्प्रभोः ॥
तथापि तं समुद्धाप्य माभै रिति स मारुतिः
समाश्वास्य निधिं तस्मै - दर्शयामास सादरः ॥
सन्तान हनुमन्मन्त्रं - द्विज सन्तान कांक्षिणोः
पुलिंदयो रुपदिशे - त्युक्त्वा सोदर धन्यताम् ॥
सोपि विप्रस्तयोर्मन्त्रं - दत्वा सन्तानकारकं
हस्तमस्तक संयोगात् - न्यासयुक्तं यथाविधि ॥
ताभ्यां सम्पूजित स्सम्यक् - वस्त्र भूषादि वाहनैः
उष्ट्रवाहशते नार्थं वाहयित्वा स्वकं पुरम् ॥

जगामानुगतस्ताभ्यां - तौच प्रीत्या निवर्तयन्
स्वगृहं प्राप्य विप्रर्षिः - सुदन्तो भार्यया सह ॥
भुक्त्वा भोगैस्सुखैस्सार्थं - अन्ते मुक्ति मुपाययौ
पुलिंदावपि तन्मंत्र माहात्म्याल्लब्ध पुत्रकाः ॥
भोगान् भुक्त्वा यथा कामं - पुत्रान् संस्थाप्य मंदिरे
भार्याभ्यां पुरुषौ पुण्य - मनुगत्वा तपस्विनो ॥
तत्रैव निधना यातौ - हनुमत्पाद मापतुः
अन्यद्रहस्यं वक्ष्यामि - लोकानामुपकारकम् ॥
अशक्तश्चेत्स्वयं मन्त्र - पुरश्चरण कर्मणि
चन्द्र सूर्य परागेषु - जपित्वा मन्त्र मुत्तमम् ॥
चरुणा गो घृतोक्तेन - अपूपैर्वा महामुने
मन्दवारे हुनेद्विद्वा नष्टोत्तर शताहुतिः ॥
श्रीकामो मल्लिका पुष्पैः - करवीरैश्च चम्पकैः
केतकी बकुलै राज्यैस्सश्रियं प्राप्नुयाद्ध्रुवम् ॥
नारिकेलोदकैः क्षीरैः - गव्यै स्सन्तर्पयेत्ततः
एवं पञ्चसु कुर्वीत - मन्दवारेषु मन्त्रवित् ॥
ब्राह्मणान् भोजयेत्पश्चा त्स्वशक्त्यात्रिमधुप्लुतः
तस्य सिध्यति मन्त्रस्तु - पुरश्चर्यां विनैव हि
सर्वापद्भ्यो विमुच्येत - कुबेर सदृशो भवेत्
क्रमोयस्सर्व मन्त्रेषु - साधकानां शिवोदितः ॥
गौतमीतीर माश्रित्य - सिंहयुक्ते बृहस्पतौ
सकृन्मन्त्र जपान्मन्त्री - पुरश्चर्या फलं भवेत् ॥
जपे यदा प्रयोगस्या - न्मंत्रस्य मुनिपुङ्गव
पूजने तर्पणे होमे - प्रयोगस्यात्तथैवहि ॥

तपोधनंहि विप्राणां - क्षत्रियाणां यशोधनं
अर्थोधनंतु वैश्यानां - सर्वेषां सुकृतंधनं ॥
परेषां प्रियवक्तृत्वं - परेषा मुपकारिता
तथैव मृदु वक्तृत्वं - जपसिद्धिकरं मुने ॥
कृत्वापापं नरो लोके - परैरज्ञात मेव हि
मनुतेत्वात्मना मूढः - रहस्यपि कृतं यतः ॥
जानन्त्येव महात्मानः - साक्षिणस्तु चतुर्दश
निमीलिताक्ष मार्जार - क्षीरपान समंत्विदम् ॥
शरीर जेन्द्रियेषु - प्रतिकूल्येषु देहिनः
पुत्र मित्रादिकानां तु - प्रतिकूल्ये किमद्भुतम् ॥
इति मुनिवरभाषितं मया ते
मृतजनजीवन मन्त्र मेव मार्य ।
निगमयति पठेत वासमर्थः
विगतगत स्सहसाऽऽयुरेति दीर्घः ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
मृतसंजीविनी विद्या प्रभाव कथनं-२ नाम
चतुर्दशोत्तर शततमः पटलः

* * *

# श्री पराशर संहिता

## पञ्चदशोत्तरशततमः पटलः

### -ः शृङ्खलाबद्ध मोचन प्रयोग कथनम् :-

श्री पराशरः :

श्लो।। प्रयोगमस्य वक्ष्यामि - शृङ्खलाबद्ध मोचनं
श्रुणु मैत्रेय योगेन्द्र - सावधान मना श्श्रुणु ॥

मनु :—

श्लो।। स्वामिन् हनूमन् भगवन् - श्रीमन् श्रीराम किङ्कर
नमस्ते निगलाबद्ध मोचनं कुरु मे प्रभो!

इवं श्लोकं प्रतिदिनं - सहस्रावृत्ति मात्रतः
त्रिशतं द्विशतं वापि - अष्टोत्तर शतेन वा ॥

जपेद्वा जापयेद्वापि - नियतेन द्विजन्मना
मण्डलं मण्डलार्थं वा - पदेन्नियम वान्नरः ॥

शृङ्खलाभ्यो विमुच्येत - शिवस्य वचनं तथा
दशांश विधिना कुर्या द्धोम तर्पण भोजनम् ॥

आपदुद्धारक स्तोत्र - मासंष्टुभद्वयं तथा
त्रयोदशाक्षरी विद्या - कवचं यन्त्र सन्निभम् ॥

पञ्च रत्नानि योगेन्द्र - तथा द्वादश नामकं
राजद्वारे सभास्थाने - प्रयाणे स्वापने तथा ॥

अरण्ये जल मध्येतु - आपत्कालेतु बुद्धिमान्
एकवारं द्विवारं वा - त्रिवारं वा पठेद्यदि ॥

तस्य क्वापि भयं नास्ति - सर्वत्र विजयी भवेत्
सत्यं सत्यं पुनः सत्यं - नात्र कार्या विचारणा ॥

डंबार्थं क्रियते कर्म - निष्फलं भवति ध्रुवं
वृथा यासो भवेन्नृणां - वंध्यायाः कुसुमं यथा ॥

रक्ता तसीसु पुष्पाणि - श्वेत दूर्वा कुराण्यपि
तथामलक पत्रं च - शलाटूनि फलान्यपि ॥

कार्तीक मासे शुद्धात्मा - विष्णुं वा शिवयेव वा
हनूमन्तं यथा विद्वान् - पूजयेच्च यथाविधिः ॥

संपूज्य मेव पुष्पं वा - कोटिपूजा समं फलं
श्वेत दूर्वांकुराणां तु - शतमष्टोत्तरं तथा ॥

अष्टाविंशति येत्रापि - गोघृताक्तं महामुने!
हुनेच्च मनुराज्येन - सप्तमन्त्रात्मिकेन वै ॥

कुबेर सदृशो भूत्वा - ऐश्वर्यं लभते ध्रुवं
सर्वशत्रुक्षयकर - सर्वलोकवशंकरम् ।।
श्वेत दूर्वाङ्कुराण्यत्र - वेदमन्त्रेण संहितान्
शिरसाधारयेद्यस्तु - दुस्स्वप्नं तस्य नश्यति ।।
अपमृत्यु परीहारः - सर्वथा नात्र संशयः
श्वेत दूर्वाणि संगृह्य - मन्दवारेषु पञ्चसु ।।
अष्टाविंशति वारन्तु - होमं कुर्याद्विचक्षणः
ब्राह्मणान् पञ्च संख्याकान् - भोजयेदिष्ट वस्तुभिः
अपमृत्यु परीहारो - भवेत्तस्य न संशयः
अंगुष्ठ तर्जनीभ्यां तु - समिधो हावयेत्सदा ।।
तर्जनी मध्यमानां च - कनिष्ठानामिकाद्वये
तं कुलानां तथा होमं - प्रकुर्वीत विचक्षणः ।।
अंगुष्ठानामिकाभ्यां च - स्रुव मध्यमया तथा
गृहीत्वा जुहुयात्सर्वं - मन्त्रपूतं हरिर्बुधः ।।
प्राणायामऽक्षमालायां - तिलके दन्तधावने
तर्जन्यंगुलि संयोगा - द्दहत्या सप्तमंकुलम् ।।
पूजा काले होमकाले - जलपाने निवेदने
दाने आचमने नैव नैकी हस्तो भवेन्नरः ।।
कार्तिक्यां शुक्लपक्षेतु - मन्दवारे विशेषतः
अथवा बहुवारेवा - येन केन दिनेपि वा ।।
येन केनापि मानेन - पूर्वाह्ले स्नान माचरेत्
नल दत्तूरपुष्पाणि - द्रोणपुष्पाणि वै मुने ।।
अष्टोत्तर सहस्रं च - पीत चन्दन मिश्रितं
त्रिशतं द्विशतं वापि - पूजयेद्धनुमत्प्रभुम् ।।

क्षयापस्मार कुष्ठादि - रोगान्नाशयति ध्रुवं
हनूमन्तं दान्तं दशरथसुत - स्वान्त निरतम् ॥
भजे तातं भांतं निजभुबि समर्चा विभवः
बिराजन्तं स्वांतं दशवदन मुज्झित्य प्राणान्
प्रशांतं द्रष्टांतं सतत बलवन्तं कुशमतां ॥
किरीटकेयूर हिरण्मयाङ्गवैः
विभूषितं कोमलगात्र विग्रहं
पद्मासनं पद्मदलायतेक्षणं
महानुभावं हनुमन्त मीले ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
शृङ्खलाबद्ध मोचन प्रयोग कथन नाम
पञ्चदशोत्तर शततमः पटलः

* * *

## श्री पराशर संहिता

### षोडशोत्तरशततमः पटलः

–ः कालकूट विषहर हनुमन्मंत्र प्रभाव कथनम् ः–

श्री पराशरः :–

श्लो॥ मन्त्रांतरं प्रवक्ष्यामि - सर्वलोकोपकारकं
शृणुष्वेकमना भूत्वा - श्रद्धया मुनिपुङ्गव ॥
कालकूट हरं नाम - समस्त विषनाशनं
समस्त मन्त्र जालेषु - श्रेष्ठं श्रेष्ठतरं विदुः ॥
यस्योच्चारणमात्रेण - विषं नाशयति ध्रुवं
पुरा यस्स्यप्रभावेन - कालकूटं हरोहरत् ॥

वक्ष्यतां सर्वदेवानां - ब्रह्मादीनां महेश्वरः
अस्य मन्त्रस्य माहात्म्याद्गरलं कबली कृतम् ॥
सदाशिवस्य कण्ठेतु - नीलकज्जलिवद्बभौ
तदा प्रभृति लोकेषु - नीलकण्ठ इतीर्यते ॥
मन्त्रोद्धारं प्रवक्ष्यामि - श्रृणु मैत्रेय तत्त्वतः
ओं नमः पञ्च वदनाय - पदात् पश्चिमेति च ॥
ततश्च वीरगरुड - वदनायेति चोच्चरेत्
गुरुबीजं समुच्चार्य - कालकूट विषेति च ॥
हरायेति ततस्सर्व - मष्टजन्तु विषाणि च
सर्पं वृश्चिक लूतादि - विषं हरहरेति च ॥
नाशयेति द्विरुच्चार्य - ममदेहे त्यतः परं
रक्षां कुरु कुरूच्चार्य - हुं फट् स्वाहे त्यथोच्चरेत् ।
चतुस्सप्तति वर्णोय - मन्त्र स्सर्वार्थ साधनः
ऋषिरस्य महादेवः - कालकूट विषाख्यया ॥
छन्दोमृत विराडुक्त - देवता हनुमत्प्रभुः
प्रणवो बीज मित्युक्तं - स्वाहाशक्ति रुदीरिताः ॥
नमः कीलक मित्याहु - र्निर्विषे विनियोजयेत्
मूलमंत्र विधानेन - न्यासं कुर्यात्प्रयत्नतः ॥

ध्यानम् :-

पूर्णेन्दु मण्डलगतं परमामृतात्त
पीयूषपूर्ण कलशं शिरसावहं तं ।
दिव्यौषधी कलित पाणि युगं प्रसन्नं
ध्यायेच्चिरं विषहरं हनुमन्त माद्यम् ॥
अष्टोत्तर सहस्रं वा - अष्टोत्तर शतं तथा
प्रीत्यानियम मास्थाय - जपेन्नित्यं समाहितः ॥

एवं दशदिनं नीत्वा - तर्पणं होममाचरेत्
ब्राह्मणान् भोजयेत्पश्चादष्टाविंशति मात्रतः ॥
एवं कृते पुरश्चर्या - सिद्धो मन्त्रो भवे ध्रुवं
ग्रहणेवा पुरश्चर्या - कुर्याद्वै मन्त्रवित्तमः ॥
अनन्तरं प्रयोगन्तु - कारयेच्च यथा विधिः
सर्पवृश्चिक लूताद्या - विष धातुक जन्तवः ॥
पञ्चवारं पठेद्यस्तु - सर्वबाधा विनश्यति
अन्यद्रहस्यं वक्ष्यामि - लोकानामुपकारकम् ॥
अपमृत्युहरं नृणां - सर्वरोग हरं परम्
आचार्यं वरये त्पूर्वं - स्वस्तिवाचन पूर्वकम् ॥
चत्वार ऋत्विजश्चापि - हनूमन्मन्त्र वित्तमान्
फलाशीवा हविष्याशी - ब्रह्मचारी जितेन्द्रियः ॥
ऋत्विग्भिस्सहित स्सम्य गाचार्य स्तत्समारभेत्
पालिकारोपविधिना - स्नापयेत्पञ्च पालिकाः ॥
गोमयेनोपलिप्तायां - भूमौ निश्चल मानसः
हस्तद्वय प्रमाणं तु - चतुरस्रं समंततः ॥
मण्डलंकारये द्विद्वान् - रङ्गवल्ली विराजितं
स्वस्तिकैः शङ्खपद्मैश्च - पञ्चवर्णैरलंकृतम् ॥
वितानैरभितो व्याप्तं - चित्रवस्त्रैः प्रकल्पितैः
चतुर्द्वार प्रदेशेषु - कदली काण्ड संयुतम् ॥
चतुष्कोणेषु कलशां - चतुरस्तत्र निक्षिपेत्
वासोभिर्वेष्टितान् रत्न - पञ्चपल्लव संयुतान् ॥
चूर्णेन समलंकृत्य - गन्धपुष्पाक्षतादिभिः
शुद्धोदकैः पूरितां च - सुवर्णकलशान्वितां ॥

शरावैः गोघृतात् पूर्णैः दीपांस्तेषु विनिक्षिपेत्
तेषां मध्ये प्रतिष्ठाप्य - पञ्च प्रस्थप्रमाणतः ॥
शालीया नव्रणान् शुभ्रां - स्तंडुलान् मध्यमण्डले
तत्र स्थाप्यांभसा पूर्णं - स्वर्चितं कलशं शुभम् ॥
सौवर्णं रजितं वापि - ताम्र मृण्मय मेववा
तेभ्यो महान्तं वस्त्रैश्च - कांचिकाभिश्च वेष्टितम् ॥
पञ्चपल्लव रत्नाढ्य - सुवर्ण रजतान्वितं
दर्भं दूर्वांकुराग्राणि - घटमध्ये विनिक्षिपेत् ॥
गोरोजनं च श्वेतार्कं - श्वेत गुञ्जा सुमूलकं
विष्णुक्रांतं सहादेवं - विन्यसेत्तस्य मध्यतः ॥
आच्छाद्य नूतनं वस्त्रं - पञ्चकोणं लिखेत्ततः
साध्यनाम लिखेन्मध्ये - पवनामृत संपुटम् ॥
तामेव विलिखेत्पञ्च - कोणेषु विलिखेत्सुधीः
मृत सजीविनी विद्यां - भूपुरे सम्यगालिखेत् ॥
प्रतिद्वार च विलिखे - त्पार्श्वयोपि विनामृते
कस्तूरी चन्दनाद्यैर्वा - कुंकुमेण विशेषतः ॥
विलिख्यैवं शुभं यन्त्रं - पूजयेदुपचारकैः
मृत संजीविनेनैव - मन्त्रेणाराधये त्शुभैः ॥
निष्कमात्रं तु सौवर्णं - तदर्थं वा तदर्थकं
रजितं पलमात्रं वा - वित्तशाठ्य विवर्जितः ॥
विग्रहं कारयेद्धीमान् - हनूमन्तं सुबुद्धिमान्
प्राणप्रतिष्ठां कुर्वीत - स्थापये द्यन्त्र मध्यमे ॥
गन्ध पुष्पाक्षताद्यैश्च - चक्रराज मनुत्तमं
परमान्नं च नैवेद्यं - सफलं त्रिमधुप्लुतम् ॥

नित्यमाराधयेद्देव - माचार्यो नियतस्सुधीः
रोगकृत्रिम भूतोच्चाटन माला मनुं जपेत् ॥
ऋत्विग्भिः सहितो - नित्यमष्टोत्तर शतं बुधः
अष्टाविंशति मात्रं वा - पञ्च मे दिवसे ततः ॥
यथोक्त विधिनाभ्यर्च्य - दशांशं तर्पयेत्सुधीः
गुडोदकेनैव गोक्षीरैः - नारिकेलोदकेन वा ॥
स्वगृह्योक्त प्रकारेण - वह्निं संस्थापये त्ततः
हुनेन्मधुत्रय युतं - क्षीरान्न तिल मिश्रितम् ॥
अष्टोत्तर सहस्रं वा - त्रिशतं शतमेव वा
होमशेषं समाप्याथ - कृत्वापूर्णाहुतिं तथा ॥
मार्जयेद्रोगिनं विद्वान् - मध्य कुम्भ स्थितांभसा
उक्तमन्त्रेण वा नुष्टुभ त्रितये नोभयेन वा ॥
ब्राह्मणान् भोजयेत्पश्चा - द्दक्षिणाभिश्च तोषयेत्
आचार्यं पूजयेत्पश्चादृत्विजश्च यथाविधिः ॥
वित्तशाठ्यं न कुर्वीत - भक्ति तस्थान् क्षमापयेत्
एवंकृते महायोगिन् - क्षयकुष्ठ पुरोगमाः ॥
लूतापस्मार चौं ड्वाद्याः - ग्रहणेच भगन्धराः
अश्मरि प्रमुखालोके - येचान्ये रोग सङ्कटाः ॥
तत्क्षणादेवनश्यंति - मार्कण्डेयायुराप्नुयात्
सत्यं सत्यं पुनस्सत्यं - नात्र कार्याविचारणा ॥
जपमध्ये क्षुतं वापि - ह्युवायुं च जृम्भणं
प्रलापं वा प्रमादेन - कुर्याद्यदि विमोहितः ॥
प्राणानायम्य सूर्यं वा निरीक्ष्या चम्य संस्मरेत्
हनुमन्नाम संस्मृत्य - दक्षकर्णं संस्पृशेत् ॥

धन मापदि संरक्षे द्रोगा द्रक्ष्यति चौषधं
जलाद्रक्षति नौका च - सदा रक्षति मारुतिः ।।
जन्तूनामति दुर्लभा मनुजता तत्रापि भूदेवता
ब्रह्मण्यापि च वेदशास्त्र विषय प्रज्ञा ततो दुर्लभा
तत्राप्युत्तम देवता त्रिषयणी भक्तिर्भवेभेदिनी
दुर्लभ्या सुतरा तथापि हनुमत् पादारविंदे रतिः ।।

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
कालकूट विषहर हनुन्मन्त्र प्रभाव कथनं
नाम षोडशोत्तर शततमः पटलः

*   *   *

# श्री पराशर संहिता

## सप्तदशोत्तरशततमः पटलः

### -: मन्त्रसिद्धि कथनम् :-

श्री मैत्रेयः :-

श्लो।। भगवन् भवता मन्त्राः - बहुधोक्ता हनूमतः
सद्यस्सिद्धिकरास्सर्वे - सर्वकाम फलप्रदाः ।।
अत्र मे संशयो ब्रह्मन् - अधुना परिवर्तते
अस्यै तदुपरीहार्थं - मधुना च्छेत्तु मर्हसि ।।
एवं विधेषु मन्त्रेषु - जाग्रत्सु जगती तले
किमित्य किञ्चन त्वेन - विशेषन्त विपश्चितः ।।
केचिद्वियोग दुःखार्ताः - पुत्रमित्रादिवर्जिताः
विद्याविवर्जिताः केचित् - रोगार्ताः भृशदुःखिताः ।।
शत्रुभिः पीडयमानाश्च - राजानोदस्युबद्भुवि
विचरन्ति न किं तेषां - सन्ततज्ञा पुरोधसः ।।

यैस्समाराध्य देवेशं - हनूमन्तं महाप्रभुं
शक्त्या स्थापय तु श्वेतुं - पदेषु पृथिवी भुजः ॥
अत्र मे संशयो ब्रह्मन् - अधुना परिवर्तते
अस्तिचेत्तु परीहार्य - मधुना वक्तुं महंसि ॥

श्री पराशरः :

श्लो॥ साधु साधु महाप्राज्ञ यन्मां त्वं परिपृच्छसि
इदमत्यन्त गहनं - समाधेय मवांतरैः
रहस्य मपिते वक्ष्ये - भक्तोसि गुरुवत्सल
तत्व जिज्ञासुनाचान्यद्गोपनीयं प्रयत्नतः ॥
पुरा महर्षय स्सिद्धाः - बहून् मन्त्रान् सुसंस्कृतान्
उधृत्य वेद राशिभ्यः - ऊर्ध्वाम्नाय गणादपि ॥
कैलास शिखरं गत्वा - प्रणिपत्य महेश्वरं
व्यजज्ञप न्महात्मानं - सर्ववेद्येश्वर हरम् ॥

सिद्धा ऊचुः :-

देव देव महादेव! - लोकानां पातुकाम्यया
अस्माभिरुद्धृतामन्त्रा - स्सर्वकामफलप्रदाः ॥
विप्रकीर्णेषु देवेषु - नानागम गणेषु च
तत्रतत्रस्थितां स्तां स्तु त्वमनुज्ञातु मर्हसि ॥
इति तेषां वच श्श्रुत्वा शम्भुर्वचन मब्रवीत्
दृष्ट्वा तु मन्त्र सामर्थ्यं - युष्माभिर्यें समुद्धृताः ॥
स्थालीपुलाक न्यायेन - पश्चादाज्ञां वदाम्यहं
अकलुषत्वं गिरिजां - मन्त्रेणैकेन सुव्रताः
प्रद्वेषयत चान्येन - गजानन षडानन ॥

श्री पराशरः :-

श्लो॥ इति शम्भोर्वचश्श्रुत्वा - तदा चक्रूर्मुनीश्वराः
तत्क्षणे देवगिरिजाप्रादु र्भूत शिवात्मिके ॥

सुगन्धि तैलेनाभ्यक्ता - स्नान योग्यांबरा वृता
उन्मुक्त भूषणासक्त - कस्तूरी गन्ध पत्रिका ॥
कलहायमानौ संप्रेक्ष्य - ममारौ शङ्करांतिके
विनैव च निमित्तेन - किमेतदिति चाब्रवीत् ॥
इति श्रुत्वा महादेवः - तामुवाच हसन्मुखः
अस्मद्वाचानलं कृत्य - किमर्थं वा गतं त्वया ॥

पार्वत्युवाच .-

श्लो॥ स्नानार्थ मभिगच्छन्तं - स्वामिन्मायोप रूपवान्
अत्राकर्ष बला स्तस्मा - दागतास्मि महेश्वर ॥
अस्माकं पश्यता मेव - निर्निमित्तौ सुताविमौ
अन्योन्य ताडन परौ - वृथैव कलहायतौ ॥
निवार्यमाणौ बहुशः - प्रमथैश्च मयापि वा
कलहन्ननिवर्तेते - ताडयन्तौ परस्परौ ॥
तां दृष्ट्वा पार्वती प्राह किमिद बालचेष्टितं
अज्ञात कलहौ पूर्वं गति मैत्रि परौसुतौ ॥
इति तस्या वचश्श्रुत्वा - बह्वाश्चर्यं समन्वितं
तथ्यमाह शिवोदेवि! सिद्धमंत्र बलादिति ॥
मंत्राणां तु परीक्षार्थं प्रेरितानां मयाधुना
मुनीनां मन्त्र सामर्थ्यो त्वया दृष्टा शुभानने ॥
एतावति बहुस्नेहौ - विद्वेषं प्रापितौ क्षणात्
पश्यामो मंत्र सामर्थ्यं - देवेष्वपि निरंकुश
पराधीनेषु मन्देषु - मनु ष्येषु तु का कथा ॥

श्री पराशरः :-

इति शम्भोर्वचश्श्रुत्वा - पार्वती रोष रोषिता
शशाप सकलान् मंत्रान् - निर्भरास्ये भवंत्विति ॥

लोके पतिव्रतास्संति - मुग्धास्सौम्याद्विजातयः
तथैव धर्मशीलाश्च - शांतादांता स्तपस्विनः ॥
तेषामाकर्षणं वश्यं - तथैव द्वेषणादिकं
सुदुर्जनेषु कुर्वत्सु - प्रमादे च भवेज्जगत् ॥
तस्मादेते महा मंत्रा - स्सिद्धि लेश विवर्जिताः
भवन्तीति शिवा शप्त्वा - जगाम स्नानतत्परा ॥
तस्यास्तद्वचनंश्रुत्वा - लोकानुग्रह कृच्छिवः
कष्टेन साधितो मन्त्रो - होमतर्पण भोजनैः ॥
गुरुदैवत भक्त्या च - श्रद्धया नियमेन च
उपवासपराणांतु - यथोक्त फलदो भवेत् ॥
इत्युक्त्वा सकलान् सिद्धान् - विससर्ज महेश्वरः
तेपिनत्वा महादेवं - ययुस्सिद्धा यथागतं ॥
तस्माच्छ्रद्धा विहीनानां - नहि मैत्रेय सिद्धिदाः
तस्माद्दरिद्रालोकेस्मिन् - दुःखिनो बहवो जनाः ॥
तेषां कर्मानुसारेण - मन्त्रेश्रद्धा न जायते
बहुनात्र किमुक्तेन - तपसासिद्धितो मनुः ॥
तपश्श्रद्धा विहीनानां - न किञ्चित्सफल प्रदं
श्रद्धाभक्ति विहीनाय - न तेषां फलदो मनुः ॥
न प्ररोहेद्यथा बीज - मुक्तं भूमौ जलं बिना
एवं गृहीतो मन्त्रोऽपि - विनाश्रद्धा न सिध्यति ॥
अश्रद्धा चैव दुर्मेधाः - अविद्याया स्सुतेप्रभो
ताभ्यां विमोहितो लोको - जडीभूतः कलौ युगे ॥
तिष्येति सर्व मन्त्राणां - निर्वीर्यत्वं विशेषतः
हनूमद्भक्ति विध्वंशः - मन्त्राश्शिष्येपि सिद्धिदाः ।

बहुनात्र किमुक्तेन - यस्य श्रद्धा हि यादृशी
तादृशीतस्य सिद्धिश्च करोति सततं मनुः ॥
इदमुक्तं मया विप्र - यमां त्वं परिपृच्छसि
रहस्यमिति विज्ञेयं - गोपयस्व प्रयत्नतः ॥

मुनिवर सकलागमार्थ तत्वं
मुहुरभिधाय महेश्वरादिशवा यै ।
अवददखिल लोक रक्षणार्थं
हितमित मेव पलायभक्ति युक्तम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
मन्त्रसिद्धि हनुमन्मन्त्र प्रभाव कथनं नाम
सप्तदशोत्तर शततमः पटलः

*  *  *

# श्री पराशर संहिता

## *अष्टादशोत्तरशततमः पटलः*

### -: हुंकार हनुमन्मन्त्र प्रभाव कथनम् :-

श्री पराशरः :-

श्लो॥ अन्यं च ते प्रवक्ष्यामि - हनूमन्मन्त्र मुत्तमं
सर्वशत्रु हरं पुंसां - सकृत्कथन मात्रतः ॥
भूतप्रेत पिशाचानां - स्मरणादेव नाशनं
पद्मकल्पे पुरादेवा - देवासुर महाहवे ॥
रक्षोदैत्या सुरैर्भीमै - दानवैश्च निषूदिताः
अलब्ध्वा विजयं सर्वे - ब्रह्माणं शरणं ययुः ॥

चतुर्मुखश्च तैस्साकं - वैकुण्ठ मगमत्पुरं
गत्वा भगवते सर्व - ज्ञापयामास चात्मजाः ॥
तच्छ्रुत्वा भगवान् विष्णुः - सहदेवर्षि सत्तमैः
ब्रह्मेन्द्राद्यैः परिवृतो - ययौ कैलास मंदिरम् ॥
अन्तः प्रवेशिता स्सर्वे - नंदिनामाधवादयः
प्रणेमुः शङ्करं गौरी - सहितं परमेश्वरम् ॥
तुष्टुवुर्विविधैस्तोत्रैः - रुद्रसूक्तै स्तथैवच
अथोपनिषदां सारैः - मन्त्रैस्त्र्यम्बकादिभिः ॥
अथ पञ्चाक्षरेणैवं - पूजया मासुरादरात्
ततः प्रसन्नो भगवान् - उमयासह शङ्करः ॥
उवाच देवादि ब्रह्मादीन् - कुशलं वस्सुरेश्वराः
जानीवः पीडितान् देवाः - दैत्य दानव राक्षसैः ॥
नमुचिर्प्रमुखैर्दैत्यैः - मद्भक्तैः स्वर्गमागतं
शरणं मां प्रपन्नाना - मुपायं विजय स्यवः ॥
वक्ष्यामि श्रद्धया सार्थं - श्रुणुध्वं सुरपुङ्गवाः
मद्भक्तो येनकेनापि - जप्यो जगतीतले ॥
तस्मान्मां निंदया पापं - तेषां संपाद्य यत्नतः
जेतव्यास्ते दुरात्मानः - भवद्भिर्विजयार्थिभिः ॥
पुरा राघव साह्यार्थं - भवद्भिः प्रार्थितोह्यहं
जातावानर रूपेण - हनूमानिति विश्रुतिः ॥
महाबलो महावीर्यो - ब्रह्मचारी दृढव्रतः
कामरूपस्सत्य संधो - भक्तवात्सल्य तत्परः ॥
बहु रामावताराणां - विधायोपकृतिं तथा
भाविनामपि रामाणामुपकाराय संस्थिता ॥

मूर्तिर्मम महाभागा - स्सर्वशत्रु विनाशिनी
तमाराधयत क्षिप्रं - सा करिष्यति वः प्रिय ॥
तन्मूर्ति मम दैत्यास्ते - जितो वानर इत्यपि
निर्दिष्यन्ते ततस्सर्वे - हत पुण्या निशाचराः ॥
हुंकाराभि गतास्तस्याः - भविष्यति गतौजसः
तत्क्षणे एव तान्सर्वान् - प्रसुप्तानिव पन्नगान् ॥
देवास्मरण संशून्यान् - पीतमद्या निवासुरान्
नाशयिष्यदधि व्यास्त्रैः - शक्तिवज्रादिभिर्मुदा ॥
इत्युक्तास्तेन ते देवाः - प्रणम्य परमेश्वरं
तदाज्ञां शिरसाकृत्वा - प्रययुर्गन्ध मादनम् ॥
कल्पवृक्षगणाकीर्णं - नाना रत्नोप शोभितं
हनूमतः प्रभावेन - कल्पांते प्यविनाशनम् ॥
तत्र रम्भावनं दिव्य - मपश्यन्तु दिवौकसः
कोटिसूर्य प्रतीकाशं - प्रभादीप्त दिगन्तरम् ॥
पालितं हनुमद्दासैः - वानरैर्भीम विक्रमैः
त्रयं स्त्रिंशत्कोटि सख्यार्बुद रुद्रगणा वृतम् ॥
जाम्बवन्नील पनस - गवाक्ष गवाक्षटादिभिः
सुरसामोद बहुल - फलपुष्प समावृतम् ॥
मत्त षट्पदनिघृष्टं - पिककोकिल खादितं
हनुमत्तेजसा व्याप्तं - चन्द्रमण्डल शीतलम् ॥
विप्रविश्यै दिवं दिव्यं - अरण्यं सुर पुङ्गवाः
तेजः पराहत वृशः - तुष्टुवुर्वा यिनन्दनम् ॥
द्वारपालस्यकं नित्य मङ्गदं कनकाङ्गदं
अङ्गदोथ समुत्थाय - प्रणम्य सुरपुङ्गवान् ॥

शीघ्रमन्तः पुरङ्गत्वादिव्य सत्कुल संकुलं
आरक्षिगण संवीत - मपश्यद्धनुमत्प्रभुम् ॥

प्रणम्यदण्डवद्देवानागतान् संन्यवेदयत् ॥
अक्षिसंख्या कृतानुज्ञादेवान् प्रादेश यत्कृति ॥

अपश्यन्नद्धते देवा - हनूमन्तं महाप्रभुं
कोटि मन्मध संकाशं - कोटि दिव्याङ्गभूषणम् ॥

रामध्यानपरं नित्यं - महामुनि गणावृतं
दिव्यचन्दन लिप्ताङ्गं - नाना भूषण भूषितम् ॥

वक्ष्यमाणं सुरस्त्रीणां - नृत्यगीतादिकं शुभं
शिवराम महादेवेत्या लपंतं मुहुर्मुहुः ॥

ऊर्ध्वंदण्डधरं शुभ्रं भस्मोद्धूलित विग्रहं
शृङ्गार वैराग्य निधि - प्रसन्न मुखपङ्कजम् ॥

प्रणम्य दण्डवद्भूमौ - तुष्टुवुर्देवतागणाः
अथप्रसन्नोभगवा - नुपवेश्य सुरेश्वराः ॥

रत्नासनेषु दिव्येषु - पूजयामासमारुतिः
अर्घ्यपाद्यादिभिर्दिव्यै - रुपचारैः प्रयत्नतः ॥

प्रोवाच चविनीतात्मा - कृतार्थोस्मि गुरुत्तमाः
अद्यप्रभृति साधूनां - महामध्यो न संशयः ॥

यतस्त्रैलोक्य पतयो - मम गेह मिहागताः
इतिश्रुत्वा सुरा स्सर्वे - प्रोचुः प्रांजलि माञ्जनम् ।

अहो भगवतो लीला - हनूमान् स्तै महापितुः
विभ्रामयपि लोकेस्मिन् - मायया सचरा चरान् ॥

त्वमस्य जगतो मूलं - कर्ता हर्ता च पालकः
त्वदाज्ञायैव ब्रह्माद्या - पालयन्ति जगत्त्रयम् ॥

त्वं हि साक्षान्महा देवः - पिनाकी वृषभध्वजः
ब्रह्म विष्णु महेशाना - मादि कर्ता सनातनः ॥

प्रार्थितो रामकार्यार्थं - मस्माभिर्नंनु मारुते
एवं संभवस्साधु - रक्षार्थं दुष्टनाशनः ॥

तदिदानीं महाभागो - नमुचिप्रमुखासुरैः
अर्दितानवनस्वामिन् - त्रैलोक्य पुरुषर्षभः ॥

इति तेषां वच श्श्रुत्वा - भगवान् भूतभावन।
मारुतिः प्रययौ देवैं - स्सह दैत्य विनाशकृत् ॥

अथतान् दैवतान् वीक्ष्य दैतयाश्शस्त्र पाणयः
अभ्युध्ययुः दशितांङ्गा रथि बाहन पत्तिभिः ॥

देवाश्च शक्र प्रमुखाः - वज्रशक्त्यादि पाणयः
हनूमद्बल मालभ्य - युयुधुः दृढनिश्चयान् ॥

ततो युद्ध मभू द्रू य - स्तुमुल रोमहर्षणं
देवाना मसुराणां च - त्रैलोक्याश्चर्य दायकम् ॥

अथासुरास्ते बलिन - बहुधा ताडयन् सुरान्
ये तस्मिन् अन्तरे - श्रीमान् हनूमान् मारुतात्मजः ॥

अग्रे भूत्वा सुरेन्द्राणा - मयुध्यत महासुरैः
तमायतं समालोक्य - दैत्या वानररूपिणम् ॥

निनिंदुर्जुहासु श्चैव - बलदर्प विमोहिताः
रेरे वानर दुर्बुद्धे - देवा निन्द्र पुरोगमाः ॥

किमहो पातुमायातः - पास्यस्येव नसंशयः
आस्तां वानर ते बुद्धिः - अमराश्च विवेकिनः ॥

कथा स्त्वमबलंब्याथो - योद्धु मायाति सत्वरा
जीवन्वानर गच्छाशु - फलाश्यतु वनं प्रति ॥

त्यक्तोपि वानरइति - दयया केवलं ननु
लज्जा भवति चास्माकं - योद्धुं शाखा मृगेण हि ॥ ५२

धिङ्नाः शस्त्राणि घोराणि - प्रक्षिप्याणि यदि त्वयि
एवं प्रलपमानानां - निन्दतां वायुनन्दनः ॥ ५३

अशुष्यत बलं तेजो - ग्रीष्मे भुवि जलं यथा
एतस्मिन् अन्तरे चक्रे - हनुमान् लोकनायकः ॥ ५४

भीमः किला किलायुक्त हुंकारं रोमहर्षणं
अट्टहासं जगद्येन - विश्रस्तं स चराचरम् ॥ ५५

अधूत्यत तदा सोयं - देवदानव पन्नगः
कल्पांतकाले संप्राप्ते - महाकालाग्नि रुद्रवत् ॥ ५६

वीरभद्र इवा भाति - दक्षाध्वर विनाशिने
हिरण्यकशिपु भेदेनर - सिंहइवा बभौ ॥ ५७

तथा त्रिपुर संहारे - गिरिधन्वायथा हरः
यथा रावण संहारे - श्रीररामशरास्थिता ॥ ५८

बहुनात्र किमुक्तेन - साक्षाद्रक्षा रिवा बभौ
तं विलोक्य तथा - दंस्याद्वात्रिशद्भुजमण्डलम् ॥ ५९

त्रिकूटशिखर प्रख्य - शिरत्रय विभीषणं
मध्याह्न सूर्य संकाश - नेत्र षट्क विराजितम् ॥ ६०

गिरिकन्धर संस्पर्धि - कराल वदनत्रयम्
महा वज्रायुधाकार - स्फुरद्दंष्ट्राङ्कुर्णाचिततम् ॥ ६१

तीक्ष्ण कौशेयक स्पर्धि - स्फुरद्रामं भयङ्करं
आपतंत स हुंकारं - व्यात्तानन इवात्मकम् ॥ ६२

दद्रुशुः भयसंत्रस्ताः - केचित्साला इवापतन्
पेमुश्च केचिद्रुधिरं - केचिन्निर्भिन्नवक्षसाः ॥ ६३

व्यलुण्ठत तथाकेचि - द्भस्मीभूताश्च हुंकृतैः
एतस्मिन्नन्तरे देवाः - पलायन परासुरान् ॥
द्रिविघ्नैः मुसलैं घोरैः - शस्त्रास्त्रैश्चैव भूरिशः
अलब्धा रक्षितारं ते - विनेशुः दैत्यदानवाः ॥
हतेषु तेषु दैत्येषु - देवास्सर्षिगणा भृशं
तुष्टुवुर्विविधैस्तोत्रै - र्हनूमन्तं महेश्वरम् ॥
कल्पांतांतक रूपाय - सर्वशत्रु विनाशिने
भक्त प्रियप्रभवते - हुंकार हनुमन्नमः ॥
स समानः सह्रुच्छान्ते - नान्नदातृसहे बुधः
न समादेवतामातुः - न समानो हनूमतः ॥
पातकं जपतो नास्ति - दुर्भिक्षं कृषितो न च
हनुमद्भजनादेव - नास्ति तस्य पराभवः ॥
आरोग्यसिद्धि रादित्या - त्कार्य सिद्धि गणेश्वरात्
ज्ञानसिद्धिर्महादेवात् - मोक्षसिद्धि जनार्दनात् ॥
हिरण्यगर्भादायुश्च - वैराग्यं च प्रजापतेः
शत्रुनाशो महेन्द्राश्च - वर्षसिद्धि हुताशनात् ॥
विजयश्चण्डिकायाश्च - लक्ष्म्या स्संपदमेव च
विद्यासिद्धि स्सरस्वत्या - सर्वसिद्धि र्हनूमतः ॥
इति स्तुत्वा हनूमन्तं - देवाश्च परमर्षयः
ववृषुः पुष्पवर्षाणि - गन्धमाल्यैरपूजयन् ॥
ननृतुश्चाप्सरो वर्याः - जगुर्गन्धर्व किन्नराः
एतस्मिन्नन्तरे देवा श्शक्राद्या वरुणादयः ॥
प्रणम्य दण्डवद्भूमौ - हनूमन्तं व्यजज्ञिपन्
स्वामिन् तव प्रसादेन - हतादैत्या महाहवे ॥

इतोः पीडयिष्यन्ति - हतशेषाः निशाचराः
पाताल संश्रिताः केचित् - केचिदम्बोधि मध्यगाः ॥
तेषां वैनाशिने सम्यक् - उपायंवक्तु मर्हसि
परोपकृति कैवल्ये - तुलयित्वा जगद्गुरुः ॥
उपकारं गुरुं मत्वा - ह्यवतारान् दशाग्रहात्
इतिश्रुत्वा वचस्तेषां - हनूमान् वाक्यमब्रवीत् ॥
मद्भक्तिमात्रं संसिद्धा - भवन्तो दैत्यदानवान्
नाशयिष्यति दिविजाः - नात्र कार्या विचारणा ॥
द्यावापृथिव्यो सूर्येन्दु - यावद्वापि वशाम्यहं
तावन्मद्भक्ति वर्याणां - दुर्गतिर्न जगत्रये ॥
अथाप्युपाय मन्यंवो - वक्ष्यामि सुरपुङ्गवाः
सङ्कटे सङ्गरे प्राप्ते - दुर्जयेषु तथाऽरिषु ॥
एवं रूपेण मां ध्यात्वा - क्षणमात्रं तु भक्तितः
हुंकार हनुमन्मंत्रं - जपध्वं सुरपुङ्गवाः ॥
इति तेषां सहनुमा - नुक्त्वा मंत्रं जयैषिणां
पश्यतां सर्वदेवानां - तत्रैवांतर धीयत ॥
तेपि देवा निरातङ्काः - प्रणम्य हनुमत्प्रभुं
स्वेस्वे स्थाने मुदा चक्रु - राधिपत्य महर्निशम् ॥
इति तव कथितायं - तात भक्त्येवनूनं
सुविमल मपिगोप्यं - भक्ति हीनस्य लोके ॥
हृदि कलय विकेली हुंकृति श्रीहनूमान्
मनुवर मखिलौघ - भेदनं वेदगम्यम् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
हुंकार हनुमन्मन्त्र प्रभाव कथनं नाम
अष्टादशोत्तर शततमः पटलः

* * *

# श्री पराशर संहिता

## एकोनविंशत्युत्तरशततमः पटलः

### -: हुंकार हनुमन्मन्त्रोद्धार कथनम् :-

श्री मैत्रेयः :-

श्लो।। उद्धारं ब्रूहि भगवन् - हुंकार हनुमन्मनोः
ऋषिश्छन्दो न्यास पूर्वं - पुरश्चरणमेव च ।।

श्री पराशरः :-

श्लो।। रां समं बीज मुच्चार्य - वायुबीजं नमोन्तक
वायु पुत्रोद्यतोच्चार्य - हनुमत् पदमुद्धरेत् ।।
सर्वराक्षस संहार - कारणायेत्यथोच्चरेत्
सर्वभय निवारणं - कुरु युग्म च हुंफट् ।।
पटुस्वाहेति मन्त्रोऽयं - द्विचत्वारिंशदक्षरः
सर्वेषामेव मन्त्राणामयं श्रेष्ठतरो मनः ।।
अस्य मन्त्रस्य हनुमान् - स्वयमेव ऋषिस्मृतः
छन्दस्य देवीगायत्री - हनुमान् देवतास्मृतः ।।
रांबीज वायुशक्तिश्च - वायु पुत्रेति कीलक
सर्वकामार्थ सिद्ध्यर्थं - साधको विनियोजयेत् ।।
न्यास कुर्यात्प्रयत्नेन - मूलमन्त्रविधानतः
अथवा रामवायुभ्यां - षडङ्गं विन्यसेद्बुधः ।।
अयुतंतु पुरश्चर्या - दशांशं विधिनाततः
होमतर्पण विप्रार्चान् - गुरुपूजासमाचरेत् ।।

ध्यानम् :-

श्लो।। द्वात्रिंशद्भुज भीषणोद्यत महाशस्त्रं त्रिनेत्रं ज्वलत्
वह्नि स्पर्धिषडीक्षणं प्रविलसद्दंष्ट्रा करालाननम्

निस्त्रिंशत्प्रतिमान लोमनिचयं हुंकार घोराकृतिं
ध्यायेच्छत्रु विनाशनाय मतिमान् उग्रं हनूमत्प्रभुम् ॥
थांतरे :–
॥ सर्वेवृश्चिक सर्प भल्लूक महा व्याघ्रादयो घातुकाः
अत्युग्राणि विषाणि शीत तपना रोगाश्च मृत्युप्रदाः
नश्येयुर्हृदि सद्य एव हनुमन् मन्त्राक्षरोच्चारणात्
नित्यं श्री हनुमत्स्मनुस्मरणतः श्रेयो लभन्ते नराः ॥ १
अत्रेतिहासं वक्ष्यामि - मैत्रेयावहितं शृणु
अयोध्यायां पुरा वैश्यो - यागनिष्ठ इतीरितः ११
सदा योग प्रमोदान्त - वैश्यस्तोमादिकान् बहून्
विधाय विहितान् यज्दान् - कारयामासच द्विजैः १२
पुत्राः द्वादश संख्याकाः - सुशीलाः धर्मबुद्धयः
भार्या च धर्म निपुणा - पति शुश्रूषणे रता ॥ १३
धर्मानुकूला तस्या सी - त्साध्वी विप्रार्चन प्रिया
अत्यैश्वयवता तेन - बहु यागैस्सुपूजिताः ॥ १४
अमरास्तुष्ट मनसः - तस्याभीष्टा नवर्धयन्
अथासौ ब्राह्मणान् भूरि - सत्रयागा नकारयत् ॥ १५
सरय्यास्तु तटे पुण्ये - तमसायास्तटे तथा
गङ्गायमुनायाश्च - कुरुक्षेत्रे तथैव च ॥ १६
वाराणस्यां सेतुबद्धे - श्री वेगे गन्धमादने
पम्पातीरे हनुमतस्तीर्थेषु सुमहात्मनि ॥ १७
तथैव नैमिशारण्ये - बहुसत्रानकारयेत्
द्वादशाहं महासत्रं - चतुर्विंशति रात्रकम् १८
गवामयन सत्रंच - रात्रि सत्रादि कान्यपि ॥
कारयामास वैश्योसौ - तथैवावार्गणान् बहून् ॥ १९

गर्गत्रिरात्रं जनकः - सप्तरात्रं तथैव च
कुलाय यज्ञांश्च बहून् - कारयामास बुद्धिमान् ॥
तानि कार्याणि देवानां - प्रीतिदान्यवलोक्य च
दैत्यास्संक्रुद्ध मनसा - कोपाद्विघ्नान् प्रचक्रमुः ॥
घोर निस्वन भीमाक्ष - गुण्ड दैत्य पुरोगमाः
सर्वत्ररक्तवर्षेण - स्रवंतो यज्ञवाटिकाः ॥
ब्राह्मणान् ताडयन्तश्च - हरन्तो यज्ञसाधनम्
अग्निनाहवनीयादि - भूषयन्तः पुरीषकैः ॥
इत्थं व्याकुलतां याते - धर्मे वैश्यः स्वकारिणे
दध्यौ देवेश्वरं भक्त्या - वज्रपाणि महौजसं ॥
ध्यातः पुरन्दरः तस्य - पुरः प्राह महामते ॥

इन्द्रः :-

यागनिष्ठ महाप्राज्ञ - गौतमस्याश्रमं व्रज
तत्र शीघ्रं शतानन्दं - तोषयित्वा धनादिभिः ॥
हुंकार हनुमन्मन्त्र - तस्माल्लब्ध्वा महामुने
जपस्वनियतो भूत्वा - तस्य मन्त्र मतन्द्रितः
ततः प्रसन्नो हनुमान् धर्मं रक्षां करिष्यति ॥

वैश्य उवाच :-

त्वमेवोपदिशस्वामिन् - देवता नायकोह्यसि
त्वत्तः कोन्योऽस्ति सर्वज्ञः - इति मे निश्चिता मतिः ।

इन्द्र उवाच :-

सत्यमुक्तं त्वयाप्राज्ञ - सर्वज्ञोहं न संशयः
देवोहं त्वं हि वैश्योसि - मत्तस्तेनाधिकारिता ॥

वैश्य उवाच :-

लिखित्वा देहि मे मंत्रं - पठिष्ये सुरनायक
नैव काल विलंबं स्याद्धर्म कार्ये महामते ॥

छन्द्र :-

विनागुरुं महामन्त्रं - कथं सिध्यति वैश्य ते
उपदेश विहीनस्तु मन्त्रो वा स्तोत्र मेव वा ॥
वन्ध्य मन्त्र इति प्रोक्तो - वीर्यहीनो वृथाक्षरं
वृथा श्रद्धां विना मन्त्रः - चित्तशुद्धि विना तथा ॥

विना गुरूपदेशेन - जपन् पैशाच माप्नुयात्
तस्माद्गुरु विनामन्त्रं - वृथा भस्मनिहेमके
देशिकस्य प्रभावे च तत्वं वक्ष्यामि सुव्रत
एकवर्णि प्रदोनृणां - गुरुः पूज्यो न संशयः ॥

गुरुपूजनं च दानंच वेद - शास्त्रार्थ निश्चितं
मन्त्रदानात्परं धर्मं - नास्ति नास्ति जगत्रगे ॥

सर्वपाप वच स्सद्यः - - मन्त्रदाना द्विनश्यति
आयुरारोग्य लाभं च - गुत्रभक्ति च विंदति ॥

गुरुणा वंचितः शिष्यः - गुरु शिष्येण वंचितः
ता वुभौ नरकं यांति - यावच्चन्द्र दिवाकरम् ॥

गुरु शिश्रूषया विद्या - पुष्कलेन धनेनवा
अथवा विद्यया विद्या - चतुर्थं नोप लभ्यते ॥

मित्रद्रोही कृतघ्नश्च - तथा विश्वास घातुकः
स्वामिद्रोही च चत्वारो - न सम्भाव्या कदाचन ॥

ग्रन्थांतरे :

मित्रद्रोही कृतघ्नश्च - ये च विश्वास घातुकाः
त्रयस्ते नरकं यांति - यावदाचन्द्र तारकम् ॥
अत्रैवोदाहरिष्येहं - इतिहासं विशांपते
कुरुपांडव संग्रामे - प्रवृत्ते द्वापरेयुगे ॥

अर्जुनं युद्ध विमुखं - भगवान् देवकीसुतः
बोधयामास तत्वार्थं - गीताशास्त्रं दयावशात् ॥
ततो उवाच भगवा नर्जुनं मधुसूदनः
कश्चिदर्थं महाबाहो - कश्चित्ते हृदयङ्गमम् ॥
इति कृष्ण वचश्श्रुत्वा - प्राह पार्थः प्रसन्नधीः
बुद्धं स्वामिन्नथत्यक्तं - श्रोतुमिच्छाम्याहं पुनः ॥
सक्षेपेन पुनर्ब्रूहि - धारणार्थं दयानिधे
एतस्मिन्नन्तर प्राह - हनूमान् केतु संस्थितः ॥
सम्यग्बुद्धं मया सर्वं - दृतं च हृदये तथा
कालांतरे प्रवक्ष्यामि - तुभ्यं साधु महामते ॥
इदानीं युद्ध कालोयं - युध्यस्व विगत ज्वराः
इतिश्रुत्वा वचः कृष्णः - मारुत केतुवासिनि ॥
प्राह भो हनुमान् आज्ञां - विना मम कथ त्वया
गृहीता ब्रह्म विद्येऽय - महामन्त्रात्मिका शुभा ॥
आज्ञां बिना गुरोर्यस्तु - मन्त्रं गृह्णाति मूढधीः
न तस्य सुकृतं तस्मा - त्पिशाचत्व च गच्छति ॥
तस्माद्विद्वांश्च त्वं तात - किमकार कुचेष्टितम्
पैशाच्यं प्राप्स्यसे - सत्य सत्यमेतन्न संशयः ॥
इति कृष्ण वचश्श्रुत्वा - अवरुह्य ध्वजाग्रतः
जग्राह पादौ हनुमान् - कृष्णस्य कुञ्चितस्तनुः ॥
उवाच च भया विष्टः - का गतिर्हे दयानिधे
केनोपायेन मे स्वामिन् - पिशाचत्वं निवर्तते ॥
कथं वा ब्रह्म विद्या मे - सफला सम्भविष्यति
इतिश्रुत्वा ततः प्राह - भगवान् देवकीसुतः ॥

समाप्ते कौरवेयुद्धं - तनुं पैशाचकीं गतः
सेतुबद्धं ततो गत्वा - स्नात्वा पैशाच तीर्थके ॥
रामेश्वरं समभ्यर्च्य - ब्रह्म हत्या निवारणं
गीताशास्त्रस्य कृत्स्नस्य - भाष्यं कुरु महामते ॥
त्वां विनान्यः कोप्यत्र - समर्थोहि महामते
त्वन्मुखा दपि लोकेषु - ख्यातं शास्त्रं भविष्यति ॥
अन्यथा दुग्रहत्वे न - लोकस्यानुपकारकं
भविष्यति महाबाहो - त्वत्तो नास्योस्ति धर्मवित् ॥
तथाहि त्वं मया तात - मोहितः कार्य गौरवात्
एवं कृते महाभाग - पिशाचत्वा द्विमोक्ष्यते ॥
लोकाना मुपकर्तासि - गीताशास्त्र विवेचनात्
पैशाचकं भाष्य मिति - लोके ख्याति गमिष्यति
भाष्यं त्वयाकृतं भद्रं - भाविना मुपकारकम् ॥

छन्दः :-

इति श्रुत्वा माधवस्य - वचनं वायुनन्दनः
धृत्वा वायु शरीरं च - गत्वा रामेश्वरं शुभम् ॥
स्नात्वा पैशाच के तीर्थे - पूजयित्वा महेश्वरं
ज्ञानतोय मयं तीर्थं - कृत्वा तत्र मनोहरम् ॥
सर्वाघौघ हरं पुंसां - हनूमत्तीर्थ संज्ञिकं
स्नात्वा पापमुक्तौच - हनूमद्भक्तिदायकम् ॥
गीताशास्त्रोक्त तत्वार्थं - ज्ञानदं सर्वदेहिनां
तत्तीरेच प्रतिष्ठाप्य - लिङ्गमेवं सुशोभनम् ॥
गीताशास्त्रस्य मतिमान् - भाष्यं चक्रे न विस्मृतं
सर्वोपनिषदां सारं - परब्रह्मा सनातनम् ॥

येन प्रकाशितं सम्य - ग्गीतार्थं प्रत्यगर्धद्वयं
तस्माद्वैश्य महाबुद्धि - गच्छ श्री गौतमाश्रमं
शतानन्दाद्गृहाणाशु - हुंकार हनुमन्मनुः ॥

श्री पराशरः :-

इतिशक्रवचश्श्रुत्वा - शीघ्रं गत्वा निशापतिः
तोषयित्वा शतानन्दं - वस्त्रालंकारणादिभिः ॥

मन्त्रं गृहीत्वा यत्नेन - जजाप घटिकात्रयम्
तावन्मात्रेण सुप्रीतो - हनुमान् भक्त वत्सलः ॥

भक्तियुक्ताय वैश्याय - प्रत्यक्षत्वं जगामह
तं दृष्ट्वा याग नित्योपि - ज्वलत्पश्येन मारुतिः ॥

वैश्यो गद्गद्या वाचा - प्रस्तोतु मुपचक्रमे
नमामि त्वां कारण कारणानां
ये तच्चेदं स्थावरं जङ्गमाख्यं
यस्मात्परं नान्यपरं च सत्यं
आनन्दरूप तमहं प्रपद्ये ॥

यत्तेजसा सर्वमिदं प्रभाति
यस्मिन् स्थितं यत्र याति क्षयं च
तदेवहि ब्रह्मपरं हनूमान्
भवानिति प्राह तथाहि वेदाः ॥

चतुर्मुख त्वां रजसा निरूपक्षं
तत्पालकं विष्णु मनंत सत्वम् ॥
अन्तेग्र संततं तभिमं महेशं

त्वां ब्रह्मदेवेश परमान् हनूमान्
त्वदाज्ञया वायुरयं हि वाति
त्वत्तो भीत्वा घृणिमानुदेति ॥
इन्द्राग्नि मुख्या परिपालयन्ति
मृत्युश्च यावत्बहुमाश्रये त्वां
अहेहि भाग्यं कपि वंशजानां
यं ब्रह्म पूर्णामृत बोधरूपं ॥
नाम्ना हनूमा निति दिव्य लीला
गृहीतकाया ऽसखिताः त्वदाज्ञया
अनेक पुण्यार्जित पुण्य राशिः
जपाम्ममैवाखिल लोकनाथ
प्रत्यक्षतामेषि सुरैरगम्यो
दिनेषु दाक्षिण्य पराहि सन्तः
सदा भूया चिरकाल प्रवर्तना ॥
इति स्तुत्वा हनूमन्तं - यागनिष्ठो महामतिः
प्रणम्य दण्डवद्भूमौ तूष्णीमास कृतांजलिः ॥
अथ प्रसन्नो हनुमान् - प्राह वैश्यं क्रतुप्रियं
जानेहं तव वैश्येन्द्रा मनोरथ मनुत्तमम् ॥
करिष्यामि क्षणाद्गत्वा - याग विघ्नविनाशनं
इत्युक्त्वा कोटि रूपाणि - धृत्वा कालाग्नि रुद्रवत् ॥
सर्वान् दैत्या सुरगणान् - यज्ञ विघ्नविधायिनः
विकृताक्षो दीर्घरोमः - शार्दूलमुखरोमकः ॥
खड्गरोम स्सर्परोमः - द्विजिह्वः कालकिङ्करः
ज्वालामुख प्रचेताश्च - दीर्घकायो महासुराः ॥
शतजिह्वाश्चोर्ध्व वक्त्रः - वीरकिङ्कर नामकः
सूकराख्यो विरूपाक्षः - कवची रक्त लोचनः ॥

व्याघ्र वक्त्रः शङ्कुनेत्रः - त्रिशिराश्चाप्यकञ्जनः
जम्बुमालिः हस्तिकर्णः - कालांतक निषूदनः ॥
ताम्रवक्त्रो सप्तजिह्वा - उल्कामुख महोदरः
अघोर वदनो नाम - धूम्राक्षो भीम विक्रमः ॥
रक्तरोमा वक्त्र दन्त्रः - शिलाभेदक नामकः
दुष्ट वृश्चिक रोमाख्यः - ऊर्ध्वकृत हयाननः ॥
स्थूल जङ्घ महादंष्ट्रा - चतुर्वक्त्र सुरांतकः
विषदंष्ट्रा वक्त्रनाशो - व्योम वीक्षण निर्भयः ॥
भेरी निस्वन भीमाक्षः - प्रमुखा भूरि विक्रमः
तास्सर्वेपिजिताः क्षिप्रं - निजहुंकार मात्रतः ॥
ततः प्रहृष्ट मनसः - सर्वे ते सत्रयाजिनः
तुष्टुवुस्तं हनूमन्तं - ऊचुजयजयेतिच ॥
ततस्तैः पूजितश्श्रीमान् - हनूमान् मारुतात्मजः
भार्यापुत्र समेतेन - वैश्येनाराधित स्तथा ॥
दत्वाऽभयं धर्मरतो - भवेत्वंतर धीरधी:
वैश्योपि बहुधा यागान् - कारयित्वा द्विजोत्तमैः ॥
भुक्त्वा भोगान् यथा कामं ब्रह्मलोक मगाम्मुने
तस्मात्समस्त लोकानां - सर्वास्सिद्धि करो मनुः ॥
किमुत बहुभि र्युक्तैः - सर्वसिद्धि प्रदेऽस्मिन्
वसति च खलु मन्त्रे - सर्वदाप्याञ्जनेयः ॥
सकल भुवन रक्षा दक्ष -
तमि तु मखिल वर्यं - मन्त्र माराधयीत ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
हुंकार हनुमन्मन्त्र प्रभाव कथन नाम
एकोनविंशत्युत्तर शततमः पटलः

* * *

# श्री पराशर संहिता

## विंशत्युत्तरशततमः पटलः

### –ः पञ्च श्वेत प्रभाव कथनम् ः–

श्री पराशरः ।-

श्लो।। अन्यद्रहस्यं वक्ष्यामि - शृणुष्व मुनिपुङ्गव!
सर्व लोकोपकारार्थं - सर्वागम विनिश्चितम् ।।

श्वेतार्कश्वेत गुञ्जश्च - कपिलो शातके तथा
कृष्णागरु श्वेत दूर्वाः - हनूमात्स्वेदजा स्मृताः ।।

पञ्च स्वेतेषु हनूमान् - नित्यंसन्निहितो यतः
तस्यास्तु हनुमत्पूजा - शीघ्रमेव फलप्रदा ।।

वह्लशीनः कुचेलस्य - दुःखशीलस्य सर्वदा
बहुमिथ्याभाषिणाश्च - तथा निष्ठुरभाषिणः ।।

सदाबलिदनं तस्य - मन्त्र सिद्धि र्नजायते
मितवादी मिताहारी - गन्ध पुष्पादि धारिणे ।।

सदा शुचौ सदानन्दे - देवता सुप्रसीदति
आपत्काले तु मर्यादः - न जानो भ्रातृ सम्मतः ।।

न च क्रोध समश्शत्रुः - न कलत्र समं सुख
सकाल नियमः पुंसां - हनूमत्पूजने भवेत् ।।

गच्छन्वापि वसन्वापि - तिष्ठन्वा पूजयेत्सदा
अंगुष्ठ मर्दनं देवे - नखतोयनिपातनम् ।।

मार्जनं परिधानेन - वर्षपात समंभवेत्
शरीर पीडा समये - रोग बाधा व्युपस्थिते ।।

महासङ्कट वेला सु - हनूमद्भजनं न चेत्
पश्चात्ताप समायुक्तो - ध्यात्वा देवं विशुध्यति
ध्यान मन्त्रं पठे द्विद्वान् - मन्त्रस्य जपतस्समः॥

ग्रन्थांतरे वशिष्ठः ।

अशक्तावन्तरायेषा - कार्यान्तर समागमे
ध्यानश्लोक जपेनैव - जपसिद्ध र्न संशयः ॥
रामशेतौ महापुण्ये - हनुमत्तीर्थ मुत्तमं
वारणास्यां महापुण्यां - रामघट्ट इतिस्मृतः ॥
गन्धमादन शैलाग्र - पालसागर संज्ञितः
नैमिशाख्य महारण्ये - पुण्य तीर्थं इति स्मृतः ॥
पम्पासरोवरं पुण्यं - सर्वाघौघ विनाशनं
यः पठेत्पञ्च तीर्थानि - भुक्ति मुक्ति च विन्दति ॥
प्रातःकाले पठेद्यस्तु - सर्वपापैः प्रमुच्यते
स्नानकाले पठेद्यस्तु - गङ्गास्नान फल लभेत् ॥
यष्वीरथं च तीर्थे - जप्तो हनुमतो मनुः
सद्यः सिद्धिकरः पुंसां - अन्यत्र तु विलम्बतः ॥
तस्मात्सर्वं प्रयत्नेन - सिद्धिकांक्षीतु साधकः
उक्ता च तीर्थाना मेक - तीर्थं तु समाश्रयेत् ॥
अयमेव महाप्राज्ञ - नदेयं यस्य कस्य चित्
बाह्य आभ्यन्तरश्चेति - शत्रवो द्विविधामताः ॥
कामक्रोधादिकाः पूर्वे - अरिषड्वर्ग संज्ञकाः
तदन्यो शत्रवो बाह्याः - स्वदेशिविनिवेशितः ॥
तत्रांतर्जयं लोके - दुर्लभो योगिनामपि
शमो दमश्च विज्ञेयो - तज्जये साधनौ स्मृतौ ॥
बाह्यशत्रु जयो नृणां - सुलभः परिकीर्तितः
अन्तरादि जयो ह्येकः - प्राधान्ये साधनं स्मृतः ॥

तस्मात्सर्वं प्रयत्नेन - षड्वर्गं विजयीभवेत्
क्रोधादि वर्धते यस्य - समूला सविनश्यति ॥
भूयोप्यांतर शतृ्णां - नाधने साधनं वदे
हनूमद्देव पादाब्ज - भक्तिरव्यभिचारिणी ॥
साभवेत्साधु संसर्गा - त्साभवेत्पूर्वं पुण्यतः
सर्वेषा मेव जन्तूनां - प्रियववतृत्वतः माचरेत् ॥
शत्रूणां प्रियववतृत्व - माचरे न कदाचन
पयोदानं भुजङ्गानां - भवेद्वै विष वर्धनः ॥
तस्मात्सर्वं प्रयत्नेन - शत्रोरहित माचरेत्
अञ्जना तनयं वीरं - ब्रह्म विष्णु शिवात्मकम् ॥
तरुणार्क प्रभं शांतं - रामदूतं भजाम्यहं
सुवर्चला सुख श्रीदं - सुवर्चो बुद्धि दायकम् ॥
सुवर्चला पति देवं - हनूमन्त मुपास्महे
शिरत्रयं महाभीमं नेत्रषट्क विराजितम् ॥
हनूमंत महं वंदे - द्वात्रिंशद्भुज धारिणं
शिखत्रय भीषणं बिल समान वक्त्रांचितम् ॥
षडीक्षण विशङ्कटं - घनतरोग्र हलायुधं
सहस्रभुज मण्डलं - सकल शत्रुसंहारकं
स हुंकृति हनूमत् - हृदि भजामि रूप महत् ॥

इति श्री पराशर संहितायां पराशर मैत्रेय संवादे
पञ्चमुख हनुमन्मन्त्र विवरणे पञ्च श्वेत प्रभाव
कथनं नाम विंशत्युत्तर शततमः पटलः

श्री हनुमत्सीता लक्ष्मण भरत शत्रुघ्न समेत
श्री रामार्पण मस्तु ॥

* * *

*पूर्व संहिता*

## विषय सूची

# GLOSSARY

This conversation between Parasara an Mytreya can be seen at the beginning of 'Vishn Purana'. Parasara is the father of sage Vyas and Mytreya taught philosophy to Vidura.

The doyen of Telugu Poetry and the winne of Jnana Peeth Award Sri Viswanatha Satya narayana in the Sundara kanda of his 'Ramayan Kalpa Vriksha' describes this form of Lor Hanuma.

It is clear that Lord Hanuma tried to catcl the Sun when he was five days old. So it is evi dent that he is born 'omni potent'

This hymn is suitable for everyday chantin by the devotees for the fulfilment of their desires

In this context the mountain "Neeladri" i the Orissa state is being referred to.

This glorifies Hanuma with his 32 hands.

This is referred to in the Chapter landin Venkatachala in 'Skanda Purana' and in th Chapter dealing with piligrimage centres in th 'Brahmanda Purana'. So the authoritative birt place could only be this. The sage Jabali did hi penance here. Hanuma manifested himself a this place. Recently the temple is renovate and devotees are flocking to it.

Researchers proved this the authentic birt day of Lord Hanuma approved by Vedas. Eve the author of the book 'Ramayana Saroddhar concurs with this.

This proves the celibacy of Hanuman.

-69-70 The verses 28 and 29 prove this.

-77 Many assertions can be found in vari( texts about the marriage of Lord Hanuman. . those who worship Lord Hanuma are also de tees of Lord Hanuma and his Consort Suvarcha There are many temples of Hanuman a Suvarchala. The great work Ramayana Sa: ddhara Comments this —

ब्रह्मचारीत्यत्र काण्वायन स्मृतिरथंत उपक्रम्यते ब्रह्मचा तुर्विधः। १· गायत्रीः २· ब्राह्मः ३. प्राजापत्यः। ४. बृहन् त्याद्य् क्त्या गृहस्थोप्येतेषु ब्रह्मचारिषु ब्रह्मचारित्वेन परिगणि जापत्य ब्रह्मचारी भवत्येव। तथैव सुन्दरकाण्डे ब्रह्मचर्यव्रते स्थि ति रामस्य ब्रह्मचारित्व मुक्तं । अपिच श्रीकृष्ण विषयेऽ ष्णोऽष्टमहिषी भर्ता - षोडश स्त्री सहस्रकः ।

अनादि ब्रह्मचारीति यथां विज्ञायते नरैः इत्यादि वर्णन ोप्येदृश ब्रह्मचार्येवेति विज्ञायते हनुमत स्सुवर्चलेति भार्याऽस्ती। ज्ञायते इतर ग्रन्थेषु तथाहि • शौनक संहितायां -

'आगच्छ हनुमद्देव - त्वं सुवर्चलया सह' इति, वानरगीता ता सुवर्चलादेवी ... पिता - मे वायुनंदनः इति। अपि मायणे सुग्रीवस्य रामाचन्द्र सविधे हनुमत्प्रेषण समये गच नीहि भद्रंते वटुर्भूत्वा द्विजाकृतिः' इत्यत्र वटुर्भूत्वेति कथन टोरेव वटोभवन मिति । पुनश्च सुन्दर० ११ सर्गे ३८ श्लो·

'परदारावरोधस्य प्रसुप्तस्य निरीक्षणं
इयंखलु ममात्यर्थं धर्म लोपं करिष्यति'

इत्युक्तत्वात्सदारस्यैव परदारव्यवहार इति ववतुं शव
त्वं दारस्ये त्यतो ज्ञायते हनुमान गृहीति......सुवर्चलासहितो:
नुमान् अनेकत्र देवालयेषु प्रतिष्ठापितोऽपि दरीदृश्यतएव गृह
ति हनुमन्त मुपासितास्संति बहुलतया लोकेऽद्यापि ।

गृहस्थो लक्ष्मी सहितो गणपतिः ब्रह्मचारी गणपतिः ब
ब्रह्मण्यः वल्ली देवसेना सहितश्च सुब्रह्मण्य उपास्यते लं
तद्भक्ति परतंत्रैर्भक्तवरैरिति ज्ञेयं विवाहानन्तर मपि ब्रह्मच
स्तीति बहुधा श्रूयते ।

---

One Circular also issued by the Endowme
department of Andhra Pradesh.

---

## Office of the Commissioner, Endowments Department A. P. Hyderabad.

Ciroular No. J/92, Dt. 13-5-1992
(File in C. No. J 5 /15104/92)

ıb :- Endowments Dept -Religious Performance
Suvarchala Anjaneya Swamy Kalyanam
temples Revised instructions - Issued.

əf:- 1) This office Circular No. Y/59972/90- 2,
dated 9-1-1992

2) Lr. dt 18-3-1992 of H. H. Jagadguru S
Shiva Chidananda Bharathi, Swamy S
Siddeswari Peethadhipathi, Courtallam

3) Lr. dt. 4-5-92 of Sri Bhagavathula Anjane
Sarma, President. Sudharma Raksha
Parishad, Tenali, Guntur Dist

Circular instructions were issued in the r
ence Ist cited, to the Executive Authorities of
empls not to perform Anjaneya Swamivari Kal
am in the temples.

Sudharma Rakshana Parishad, Tenali
wamiji of Courtallam in the references 3rd
nd cited represented that the Kalyanotsavan
njaneya Swamivaru war being performed i
umber of temples as perusage and custom sinc
ng time and they referred 'Parasara Samhit
support of their contentions.

The matter has been examined carefully a
is considared, desirabe permitting performor
Kalyanotsavam to Sri Anjaneya Swamivaru
r usage and custom in the t empls as usual a
cordingly the following revised instructions a
sued.

The Executive Authorities of the temples a
rmitted to perform Kalyanotsavam to Anjane
vamivaru as per usago and custom in the templ
usual.

The Deputy Commissioners and Assista
mmissioners are requested to bring this rovis
cular instructions to the notice of the Executi
thorities of the temples in their respective jur
tion immediately.

The receipt of the circular should be
acknowledged atonce

(By order of the commissioner)

(Sd) T. S. S. NARAYANA RAJ

Additional Commissioner

(Sd)..........................

Superintendont.